शिशः. अर्केण कुतो हेतोस्सोध्यापित इत्याह अरुणेन मातृस्व(l.12)स्नेय-स्वात्प्रवेशितः अथ······र्धा·········धारितां भूमिं भूयो र·········
·········(l.13)[1].

स॥सहस्र[पादेन सूर्येण निकामसे]वनोद्धे[तोः पादद्वितये](l.14)न कृतप्रसादो दत्तपादद्वयः. सूर्यस्य सहस्रपादत्वात्पादद्वयदानोक्तिसङ्गतिः. (l.15)एषोरुणः किं नु म्लेच्छच्चोभितं पुष्करं पवित्रीकर्तुमवरूढः॥

चि॥श्रीरामपा(l.16)दसेवया त्यक्तपशुजन्मपाशविकारो जन्मान्तरे शिक्षितराक्षसवधोयमपरं(l.17)

[Lines 18 to end of page missing]([*])

ततो युद्धे मरणेनार्कमण्डलं प्रविश्य किमेष कर्णो भूतलमेति. कर्णः कथमियदी(l.1)[2]त्याह अयोनिजत्वेन समेधिता द्युतिर्यस्य॥

जग॥जगत्प्रदीपादर्कादी(l.2)श्वरेच्छया प्रदीपितो द्वितीयो जगत्प्रदीपः सूर्यः किमेष भवति. किं वा द्वादशानां(l.3) सूर्याणां तेजसा कृतः किमेष भवति. द्वादशविधराजजैत्र इति हेतुः॥

इति॥(l.4) प्रतापमूलस्थानेन तेजसा हेतुनैवं देवराजेन चर्चितः कृतकल्पनः त्रिभुवन(l.5)पुण्यराशिः पुरुषोर्कमण्डलान्निर्गतः॥

इतः प्रभृति स योपि रेवन्तं इत्यन्तं पु(l.6)रुषरूपवर्णनपरं कुलकम्॥

यथा धुसिन्धोस्सलिलाद्यथाग्नितः
तथैव पुण्या(l.7)दपि भानुमण्डलात्.
महेश्वरस्यैपं तनोस्समुद्गतो
जगद्द्विषां संहृतये गुहः (l.8)पुनः॥

---

1 Ms. मलेत्यन्वयः crossed at the beginning of line. 2 Ms. 'नदे'.
3 Ms 'पर्थिका-' 4 Ms 'मरप.' 5 Ms. रेवर्म'.
6 Ms 'यैव, 'प written above 'व.

आग्नेयो गाङ्गेयश्च कुमार इत्यागमः . अतः कविरूहति अष्टमूर्त्ति(l 9)-मूर्त्यन्तरात्सूर्यमण्डलाच्छंग्रक्षयार्थमेष कुमार इवं निर्गत इत्युत्प्रेक्षा . पुरुषो विषयो गु(l 10)हो विषयी . विषयित्वेन विषयस्य सम्भावनार्थं महातेज-स्त्वमनपा······स्समानो(l 11)················ ॥ 15.

स्वभावसि[द्धाभरणादि] ⏑ —
प्रभावलीलार्थगतावकाशया -
शनैर्ज(l 12)नन्या प्रतिमान्यतावशा-
न्निपिद्धयेव स्वयमेव नान्वितः ॥

देवानां छाया न भ(l 13)वतीति प्रसिद्धिः तदेव कविरुत्प्रेक्षापूर्वमुप-न्यस्यति . शनैर्जनन्या रुद्धा(l 14)यया नान्वितः . छायाया अभावे हेतुं संभावयति नैसर्गिकभूषणार्दा(l 15)-

[Lines 16 to end of page missing] (**8[4]) .

द्धेति[5] भावः ॥ 16.

पतङ्गवानायुजरोमकोमलै-
र्निकामकार्शैरपि कुन्तलोत्करैः .
गुणाननुज्झद्भि(l 1)रिवान्वयाश्रया-
न्विनिर्ममाणो रजनीपराभवम् ॥

पतंगस्य रवेर्वानायुजा येश्वास्तद्रोमवत्कोम(l 2)लैरत्यर्थमेचकैः केशै रात्रेरप्यवमानं कुर्वन् . अत उत्प्रेक्ष्यते कारणानुगुणान्गुणानत्यजद्भि(l 3)रि-वेति . तेषां कारणं दिवार्कमण्डलोत्थितः पुरुषः ॥ 17.

किरीटरत्नातपमण्डलच्छला-
द(l 4)धत्सुधांशोरपि सुन्दरं मुखम् .

1 Is it 'रत्न' ? 2 Ms. इव is under l 10 3 Ms. °तार्थया°
4 Ms. ४ on margin. 5 Read छाया निषिद्धे°. 6 Ms. °रसिद्ध°.

अनश्वरीस्तुमिवाहिमत्विषा
सुधांशुजीवातुमिवांशुमर्पितम् ॥(15)

सुधाशोर्जीवातुर्जीवनौषध सुपुम्णाख्यो रश्मिस्तमिव मौलिस्थरत्नर-
श्मिव्याजाद्दधत कु(16)त प्राप्तमित्याह सूर्येणेन्दुसुन्दर सुगमविनाशीक-
र्तुमिव दत्तम् चन्द्र क्षीणरसस्सुपुम्णप्रवेशेन व(17)र्धते अस्य च मुख
चन्द्र तमेव सुपुम्ण प्रविशतु यथा न जातु क्षीयत इति भाव ॥ 18

न मृष्य(18)ते कस्यचिदेप वक्रता-
मितीव मत्वा परमार्जवस्पृशा ।
कदाचिदिन्दोः कलयेव भास्वता
वि(19)तीर्णया चन्दनलेखयान्वितः ॥

सूर्येण प्रसादीकृतया सरलया चन्द्रकलयेवं चन्दन(110)ललाटिकया
युक्त चन्द्रकलायास्सरलत्वकल्पनाया हेतुमाह एप पुरुप कस्यचि(111)-
द्वक्रता कुटिलात्व न सहत इति ॥ 19

तवासुरान्पादतले करोम्यहं
न शुक्रबुद्ध्या व्यवहार्यमन्यथा ।(112)
इतीव मुक्तामणिकुण्डलात्मना
शुभग्रहाभ्यामवलम्बितश्रुतिः ॥

इन्दो कदाचित्क्षीणत्वेन त(113)था बुधस्य च जातुचित्पापसाहच-
र्येण पापात्मकत्वाच्छुभग्रहौ जीवशुक्रावेव ताभ्या मुक्ता(114)कुण्डल-
व्याजाद्धारीकृतकर्ण अत्रोत्प्रेक्ष्यते तवासुरानित्यादि तत्र जीव आह
अह तव पादतलगानसुरा(115)न्करोमि भवता शुक्रप्रेरणया [न्य]-
था मद्वचनपरित्यागेन न व्यवहर्तव्यम् शुक्र(116)स्यासुरपक्षपातित्वादिति

---

1 Ms वातास 2 Ms त्वाशतु 3 Ms च क 4 Read ग्या मुक्ता मुक्ताक 5 Ms धाना 6 Ms ॥ to । Ic under I 10

भाव: शुक्र आह तव पादतलेसुरान्करोमि त्वया शुक्रोसुरगुरु(117)रिति मयि वैरिपक्षसंभावनयान्यथा मद्वचनत्यागेन न व्यवहर्त्तव्यम् ॥ 20.

महीतले कुत्र(118)चिदुज्झितासने
सरस्वती श्रीश्च भयाद्भविष्यतः .
इतीव पद्मौ दधदेतयोः कृते
दृशोश्च्छला(119)द ⏑ ⏑ — ⏑ — ⏑ — ॥

........ ...... ..मरे भूमौ भविष्यतः अस्माद्धेतोरिव(120) 21.

[Lines 21 to end of page missing] (*)

सरोजलक्ष्म्या सितरक्तया रवे-
रयं कुले रत्नमितीव चुम्बितम् ॥

अरुणांशुभिरिव कृतं स्मितकान्तिच्छु(11)रितमधरं दधत्. अत्रोत्प्रेक्ष्यते अयं पुरुषस्सूर्यवंशे रत्नभूत इत्यतो हेतोरिव पद्मिन्या शुभ्रारुणया लक्ष्म्या चुम्बितं. माता हि(12) पुत्रं चुम्बति ॥ 22.

विनिर्मितेनेव तमोभिराहृत-
विवस्वतान्धङ्करणैर्जगद्द्रुहाम् .
विराजमानस्सह ते(13)न वर्मणा
नवाम्बुदेनेव नभोग्रसङ्गिना ॥

जगद्द्रुहां दैत्यानामन्धंकरणैरान्ध्यंकरैः तमोभिः करण(14)भूतैरादित्येनानीतैः कृतेन कयचेन शोभमानः तत्स्वदर्शनाद्धि दैत्यानां तमांसि(15) दर्पा गलन्ति नभोमात्सङ्गिना लग्नेन मेघनेवेति सम्भावनम् ॥ 23.

शिशिनिशाकान्तकला(16)सुधालवैः
कलिन्दकन्याजलरोपशुक्तिषु .

1 Ms. 'रिन्ड'. 2 Ms. 'प' to 'दा' is at the top of page 3 Ms 'तन्पक'.
4 Ms मेबनेडे, 'न' (sic.) is above 'घ'

च्युतैरिवोत्पन्नमिनस्य मण्डले
मनोरमं मौक्तिक(l 7)दाम धारयन् ॥

यमुनाजलान्निर्गताग्यन्छेपं तदेव शुक्तयस्तासु पतितैः प्रविशश्चन्द्रक(l 8)-
लामृतकणैरर्कमण्डले उत्पन्नमिव मुक्ताहारं हारिणं धारयन् ॥ 24.

सुरद्विषां विघ्न(l 9)यितुं मनीषितं
गृहीतमभ्यर्थ्य रवेरिवान्तिकात् .
उदारगारुत्मतनायकच्छला-
त्समुद्वह(l.10)न्नङ्कतले शनैश्चरम् ॥

दीप्तगारुडमध्यमणिव्याजादुत्सङ्गे शनैश्चरमिव दधत् . कुतः प्रा(l 11)प्त
इत्याह रविसमीपाद्याचित्वा गृहीतमिव . याचने हेतुमाह दैत्यानामभिप्रायं
हन्तुम्(l 12) . शनैश्चरो हि सेवितश्शत्रून्हन्ति ॥ 25.

किरीटकेयूरयुगाङ्गदद्वयी-
वतंसरत्नप्रतिबिम्बितामरः(l 13) .
सुतान्विधातुर्दधदर्यमार्पिता-
न्न वालखिल्यानिव नानुयात्रिकान् ॥

किरीटकेयूरयुगे चा(l 14)ङ्गदद्वय्यां च यानि वतंसभूतानि रत्नानि
तेषु प्रतिबिम्बिता अमरा यस्य सः अतस्संभाव्यते(l 15) अनुयात्रिकाननु-
गमनोद्यतान्ब्रह्मात्मजान्वालखिल्यानिव न न दधदपि तु दधानः . वालखि-
(l.16)ल्याः केन हेतुना तं सेवन्ते इत्याह अर्यम्णा दत्तान् . तथा सूर्यो
विघय(?)····· दिति भावः ॥ 26.

प्रदी[प्यमानो](l 17) रविमण्डलान्तरा-
दवाप्तकर्मारविधेयकर्मणा .

1 Ms °मंमो°. 2 Ms वा°

कलिन्दकन्यासलिलानुजन्मना
स्वकीर्त्तिग(1.18)ङ्गासहवासिनासिना ॥

कर्मारे शाणे. प्राप्तशाणघर्षणेनेत्यर्थः यमुनायाः यामुनजन्मनां सोदरेण स(1.19)··············गङ्गया सहवासि[ना खड्गे]न भ्राजमानः ॥ 27.

न चक्रमेकं भवति मयो(1.20)⌣— 28.

[ *Lines 21 to end of page missing; last 3 letters of line 21 are* मकरे ](**9)

रीं समर्पिताम् ॥

सूर्येण दत्तां मालां कण्ठे धारयन्. अत्र संभाव्यते हरस्य तृतीयनेत्रं विरातः कामस्य(1.1) हरत्कस्तां धनुर्लतां हरस्य दक्षिणनेत्रस्थेनार्केण हरस्य सकाशात्प्राप्तामथ सूर्येण दत्तां ॥ 29.

द्वितीय(1.2)वैवस्वतवद्विरोधिनां
हठात्पदं मूर्ध्नि निधातुमुद्यतः.
विनीलगुल्फाभरणांशुमण्डल-
च्छलेन पादौ(1.3) दधदायसाविव

द्वितीयो यम इव शत्रूणां शिरसि बलाधरणं
गु(1.4)ल्फाभरणानामंशुराशिव्याजेन लोहमयौ पादाविव दधत्. यमो हि लोहमयपादः ॥ 30.

स(1.5)पक्षपातं दिनपत्यपत्यमि-
त्यशेषभूमण्डलवन्द्यताकृते.
चकासदङ्गुष्ठनखप्रभामिषा-
त्स्थितेन स(1.6)न्ध्याद्वितयेन पादयोः ॥

1 Ms. कस्तां. 2 Is it यमुनानुजन्मना? 3 Ms स्वदनाति°. 4 Ms. °ल्फा°.

अयं दिनपतेरपत्यमित्यतो हेतोम्र्मनजनैर्वन्दनीयत्वार्थ मानुरागं(। 7) रियतेन सन्ध्याद्वयेन पफागच्छोभमानोऽमुम्रांशुर्व्याजात् ॥ 31.

मनोऽपि मस्तुतधर्मशासन-
श्शनैश्च(। 8)गतृप्यलसः कुपद्धतौ ·
हरीश्वरादप्यतिमित्रवत्सलो
यथोचितं दण्डधरो यमादपि ॥

मनोर(। 9)पि सकाशात्प्रारब्धधर्मव्यवहारस्तथा कुपद्धतौ कुत्सितमार्गे भूमिमार्गे च शनैरप्यलस. सु(। 10)र्यावादप्यातिशयेन मित्रप्रियः यमादपि यथोचितदण्ड· . सूर्योत्पत्या मन्वादिभ्यो भ्रातृभ्योऽति(। 11)रेको दर्शितः॥ 32.

यदर्थ्यते किंचन येन केन चि-
त्तदस्य कर्णादपि दातुमीश्वरः ·
मनो दधानस्सु(। 12)मनोरुजात्तयं
विधातुमुज्जागरमश्विनोरपि ॥

येन येनचिद्गुणिना निर्गुणेन वा यत्किंचन दे(। 13)यमदेयं वा म यार्च्यते तदप्यर्थिने दातुं कर्णादप्युत्साहवान्. अश्विनोरपि सतोरश्विनाव-ना(। 14)दत्येत्यर्थ. सुमनसां देवानां साधूनां च रुजात्तये सावधानं मनो दधत् ॥ 33.

स योऽपि रैवन्त इ(। 15)ति प्रसिद्धिमा-
नपत्यरत्नं नलिनीविलासिनः ·
तुरङ्गविद्याचतुरस्ततोऽप्यसौ
मधुद्विपः पाद(। 16)समीपमासदत् ॥

विंशत्या कुलकर्म् ॥

---

1 Ms °वम्द  2 Of these 20 verses, beginning with यथा सूर्यसन्यो°, three are incomplete but none is entirely lost.

स योपि रेवन्तनामा प्रसिद्धस्सूर्यस्य श्रेष्ठ. पु(l 17)त्रस्तस्मादप्यश्वविद्याकुशलो विप्णो पादतलं प्रापत् ॥ 34.

स पुष्कराशेषसमुद्रपूरि(l 18)तैः
कुलापगानां पयसा भृतैरपि .
निधानकुम्भैरपि रत्नसंकर-
प्रभाघनैरुत्पलदामहारि(l 19)भिः ॥ 35.

असर्जयद्भूभुजगीविभूषितै-
र्भृशं प्रमोदाश्रुभरेण निर्भरैः[2] .
महात्मनष्पोडशभिर्विलोचनै-
र्महाभिषेकं विधिना सहाच्युतः ॥

युगलकम् ॥ (l 20)

सोच्युतोस्य महात्मनो विधिना ब्रह्मणा सह महाभिषेकं पोडशभिर्नेत्रैरारब्धवान् यत आन(l 21)न्दाश्रुपूरितैर्निधानकुम्भैरिव . तेपि भुजङ्गीवृता भवन्ति . अभिषेके पोडश कुम्भा योज्या इ(l 22)त्याचारः . यद्वा पुष्करादीनां च पोडशसंख्यात्वं कुम्भाना पोडशत्वम् ॥ 36.

प्रणामकाले विधिवासुदेवयोः
करैश्चतुर्भिश्च करद्वयेन च .
धृतोत्तमाङ्गस्स(l 23*) षडन्तरानपि
द्विषः प्रतिक्षेप्तुमिवाक्षयान्नलम् ॥

ब्रह्मण. करद्वयेनाच्युतस्य (l 1)करचतुष्टयेन प्रणामावसरे धृतशिरास्सन्कामादीन्षड्ग्रून्जेतुं बलं प्रा(l 2)पत् . हस्तानां पट्त्वादिव प्रतीयमानोत्प्रेक्षा च ॥ 37.

अशेषगात्रोदरगर्भवर्तिनां
त(l 3)रङ्गिणीसागरपाथसां लवैः .

1 Ms 'बन्द' 2 Ms 'रै 3 Ms महान' to 'हाच्यु' le on margin 4 Ms दश to 'रान्' le under l 23 of fol 10-स्तम-पत्रे देवता अप्रयर्त्ति. 5 Copyist's remark at top of p 2

निरित्वरैर्नेत्रपथेन शार्ङ्गिण-
स्समस्ततीर्थैरिव सो(1.4)भ्यषिच्यत ॥

नद्यस्सर्वाङ्गसन्धिषु कुक्षौ समुद्रश्च इति दर्शनात् हरेस्समस्ताङ्गेषु वर्ति(1.5)-
नीनां नदीनां तथोदरे स्थितानां समुद्राणां जलकणैर्दृङ्मार्गतो हर्षवशान्निर्ग-
च्छद्भिरशेषतीर्थैरि(1.6)व सोभिषिक्तः ॥ 38.

निसर्गपूर्णं कलशं दधद्विधि-
र्हरिश्च शङ्खं तत एव पूरयन्. (1.7)
धराधिपत्ये प्रमदाश्रुणा स्वतः
कृताभिषेकं पुनरभ्यषिञ्चताम् ॥

ब्रह्मा कलशं स्वभावजलपूर्णं दधद्धरिश्च सरित्समुद्रेभ्यश्शङ्खं पूरयन्नु-
भौ ब्रह्माच्युतौ प्रथममानन्दबाष्पेण कृताभि(1)षेकं तं चक्रवर्तित्वे पुनर-
भ्यषिञ्चताम् ॥ (1) 39.

कलौ युगे(1.8) बुद्धतया स्थितो हरि-
र्ददाति यत्कारुणिको जनान्प्रति ·
तदापदस्मादनुभावस(1.9)प्तकं
स सप्तलोकीविजयस्य साधनम् ॥

कलिकाले बुद्धरूपो हरिर्दयालुर्जनान्प्रति(1.10) यद्ददाति तदनुभावानां
वक्ष्यमाणानां प्रभावाणां सप्तकं विष्णुसकाशात्प्रापत्(1.11) सप्तभुवनजय-
स्योपायम् ॥ 40.

महाप्रभावानुपलभ्य सप्त ता-
नवाप्तवान्सप्तम(1.12)चक्रवर्तिताम् .

---

1 Ms. °नमा°. 2 Mahābhārata, Shānti, 46.63, 'मुद्राश्चत्वारस्तस्मै तोयात्मने नमः', see note 2, p.18. 3 Sic. Is it दर्शनात् ? 4 Ms. °गजह°. 5 Ms. °ज° to °शा° lc. on margin. 6 Ms. ।।७ after °न्. 7 Ms. the whole of the Comm. on this verse is lc. on margin.

यदस्ति किंचित्करणीयमुच्यतां
तदित्यभूत्प्राञ्जलिरग्रतस्तयोः ॥ (l 13)

सप्त महतः प्रभावानवाप्य सप्तमचक्रवर्तिभावं लभमानस्स कर्तव्यमा-
ज्ञाप्य(l.14)तामिति वदंस्तयोः पुरो बद्धाञ्जलिरभूत् ॥ 41.

सुदर्शनस्य प्रतिपादकं प्रति(l.15)
त्रिनेत्रमुत्तानितपूर्वमेकदा .
पुरोस्य विश्वाभयदक्षिणाकृते
प्रसारयामा(l 16)स करं जनार्दनः ॥

सुदर्शनस्य चक्रस्य दातारं त्रिनेत्रं प्रति हरिणा कदाचि(l.17)त्पूर्वमु-
त्तानितं हस्तं हरिरस्याग्रे जगदभयदक्षिणार्थं प्रसारयामासोत्तानं(l 18)
कृतवान् ॥ 42.

ततो नियुक्तस्स यथोदिते विधौ
विधौ च देवे च विधौ तिरोहिते .
यश(l.19)स्यमर्त्यारि— — ⌣ —विधौ
विधौतपाप्मा भरवन्धमग्रहीत् ॥

विधौ ब्रह्मणि वि(l.20**10)धौ विष्णौ च देवेन्तर्भूते सति ताभ्यामसुरवधे प्रेरितो विधौतपाप्मानुचितपापस्स पुरुषोसुरप(l.1)ह्मानां संकोचकत्वाच्चन्द्रसंमे यशसि भरवन्धमभिनिवेशं गृहीतवान् ॥ 43.

फरेण चापस्य ह(l 2)रेर्मनीषया
बलेन मानस्य नयस्य मन्त्रिभिः .
धृतस्य नामाग्रिमरणनिर्मितां
स चादमानोप(l.3)मिति प्रथां ययौ ॥

---

1 Ms. [illegible]. 2 [illegible] 3 Ms. [illegible] on margin.
4 Ms. [illegible]. 5 Ms. [illegible].

स पुरुषश्चाहमान इति प्रथां प्राप्तः नाम्नामिमामक्षरैः कृतां . केषां ना-(l.4)मानीत्याह् . करेण धृतस्य चापस्य तथा मनीषया धृतस्य हरेस्तथा ब-लेन धृतस्य मानस्य(l.5) तथा मन्त्रिभिर्धृतस्य नयस्य. चापादीनां नामा-द्यक्षरैरिव कृतां चाहमान इति संज्ञां स लब्ध(l 6)वानित्यर्थः ॥ 44.

कदाचिदुत्कण्ठित एष मा स्म गा-
द्विलोकयन्नर्कमितीव विष्णुना[1].
विरिञ्चसा(l 7)मान्यमवेत्य लम्भितं
स्वनाभिपङ्केरुहमातपत्रताम् ॥

एष सूर्यपुत्रः पितर्युत्कण्ठितस्सूर्य(l.8) विलोकयन्सूर्यदर्शनहेतोस्सूर्यं मा गादितीव माहात्म्यविषये ब्रह्मणस्सादृश्यमवेत्य विष्णु(l 9)नास्य स्वनाभि-पद्मं छत्रतां नीतम् . छत्रत्वेन नाभिपद्मं हरिरदादित्यर्थः . विलोकयन्निति हे(l.10)तौ शतृप्रत्ययः . अयमर्थः ब्रह्मा मम नाभिपद्माश्रयः अयं च ब्रह्म-णस्सदृशः अस्याप्यहं(l 11) निजपद्मं ददामीति . यद्वा विरिञ्चसामान्यं साधारणमिति नाभिपद्मस्य विशेषणम् . त(l.12)स्यातपत्रतामवेत्य लम्भि-तम् . उपेत्येति पाठ आर्षः ॥ 45.

विवृद्धिमानीय दिनानि कानिचि-
द्गु(l.13)नः पिता ते तनुतां तनोति मे .
यशोनिधे तद्विभृहि त्वमेव मा-
मितीव सेवापरमिन्दुमण्ड(l.14)लम् ॥ 46.

तथा न विश्रान्तिपदं रिपुर्मधो-
रवैति मां मानद पुष्करं यथा .
उपप्लवस्तद्द्रुतमे(l 15)व वार्यता-
मितीव दुग्धार्णवमेव सेवकम् ॥

1 Ms. वष्ण्वि°. 2 Pāṇini 3.2.126. 3 Ms. °ष्यसा°. 4 Ms. °ब्भिद्°.

तव पिता सूर्यो मां कंचित्कालं संवर्ध्य मम हानिं करोति(l 16) तस्माद्धेतोर्हे यशस्विस्त्वमेव मां रक्षेतीव सेवायां सक्तं चन्द्रमण्डलम् ॥ तथा ॥ मघो रि(l 17)पुर्विष्णुः पुष्करं यथा विश्रामस्थानं जानाति तथा न मां जानाति तस्माद्धेतोर्म्लेच्छोपद्रवशीघ्रमे(l 18)व वार्यतामित्यतो हेतोस्सेवकं क्षीरसमुद्रमिव ॥ 47.

हिरण्यगर्भस्य कमण्डलूदरे
यमेव सं(l.19)स्थानविशेषमश्नुते .
तमेव धृत्वेव महेश्वरभ्रमा-
त्स्थितं हृदं मूर्धनि सौरसैन्धवम् ॥

ब्रह्म(l 20)णः कमण्डलुमध्ये गङ्गाजलं यमेव संनिवेशनं प्राप्नोति तमेव संनिवेशं गृहीत्वायं महे(l 21)श्वर इति भ्रमाच्छिरसि स्थितं गङ्गाप्रवाहमिति रूपकम् . अयमपि हि महान्भूमेरीश्वरः ॥(l.22) 48.

नभस्सरस्सारसयोर्यलद्विपा
हिमाचलस्य स्फटिकाचलस्य च .
ध्रुवं कृतं पत्रतिभिर्नभश्वरै(l.23)-
रमित्रशान्त्यर्थमुपायनीकृतम् ॥

नभ एव सरस्तत्र सारसयोर्हंसयोर्हिमाद्रिकैलाशयोः(l.24*) संबन्धिभिः पत्रतिभिः पत्रैरिन्द्रेण नूनं कृतं सच्छत्रुत्त्यार्थं देवैर्ढौकनीकृतम् ॥ 49.

अदरपमूर्तिस्स्वयमुष्णवा(l 1)रणं
रयाद्गपाणेस्सहधर्मचारिणी .
समुन्नतिं सूर्यकुले करिष्यतो
रघोरिवास्यापि बभार मूर्धनि ॥

तनै(l 2)रदरया श्रीस्सूर्यकुले माहात्म्यं करिष्यतोस्य रघोरिव शिरसि धृतवती दमम् ॥ कुलकम् ॥ 50.

---

1 Ms. द.     2 Ms. दे' l.c. above l 1.

अयं यथा(13) मे तनयस्तथा कृती
न कश्चिदन्योपि कदाचिदप्यभूत् ·
इति स्वकं विम्बमिवोष्णरश्मिना
प्रतापवृद्ध्यै कृ(14)तमानुयात्रिकम् ॥ 51.

अचिन्तयद्यो मनसापि विप्रियं
तमप्युपस्थाय विहन्तुमीश्वरम् ·
सुदर्शनाद(15)प्यधिकप्रभावभा-
गुपास्त चक्रं विजयेषु तं दिशाम् ॥

युगलकम् ॥

अयं मम पुत्रो यथा कृती भ(16)वति तथा कोपि नान्यो मत्पुत्रोभूदि-
त्यतो हेतोस्सूर्येण प्रतापवर्धनार्थमानुयात्रिकं कृतं निजं विम्बमिव तथा(17)
यो मनुष्यो देवो वा चित्तेनाप्यनिष्टं चिन्तयति तमप्येत्य निहन्तुं समर्थं
यतो हरिचक्रादपि सप्रभावं चक्रं(18)विजयकालेषु तं सिषेवे ॥ 52.

प्रजापतेस्सृष्टिरिवात्तविग्रहा
स्थितिक्रिया मूर्तिमतीव वैष्णवी ·
किम(19)न्यदध्यापितदेहडम्बरा
स्वयं न वा संहृतिशक्तिरैश्वरी ॥ 53.

दधत्यशेषैरपि लक्षणैस्तनू-
मलङ्कृतां र(110)त्नमरीचिमालिनीम् ·
अभून्नदीभर्तुरिवाधिदेवता
पुरोस्य ताम्बूलकरङ्कवाहिनी ॥

मूर्तिमती ब्रह्म(111)णस्सृष्टिरिव तथा मूर्ता विष्णुसम्बन्धिनी स्थिति-
रिव तथा किमन्यद्वर्णयाम इति शेष. अध्यापि(112)तश्शिक्षितो देहड-

---

1 Ms °सूद° 2 Ms मत्पुनो° lc. under 1.6. 3 Ms. यतो lc. under 1.7.
4 Ms °जल्का°. 5 Ms. °तार°.

म्बरो मूर्तिग्रहणं यया सा हरस्य संहारशक्तिरिव सर्वैरुत्तमस्त्रीलक्षणैर्भूपि-(1.13)तं नानारत्नधारकं शरीरं दधती अत एव रत्नाकरस्याधिदेवतेव ताम्बूलकरङ्कवाहिनी पुरोस्याभवत् ॥(1.14) 54.

इदं ममोन्मूलयति स्म यश्छला-
दमुष्य वक्त्राणि यथैव सन्ति पट्.
तथैव दन्तान्दनुजक्षयक्षमा-
नहं(1.15) न गृह्णामि किमित्यसूयया ॥ 55.

गृहीतवानभ्यधिकं प्रभावतः
पतिर्गणानामिव दन्तपञ्चकम् .
मुखा(1.16)नुरूपीकृतसर्वविग्रह-
स्तमन्वगादाजिषु गन्धसिन्धुरः ॥

युगलकम् ॥

यो मम दन्तं छलादुन्मू(1.17)लितवांस्तस्य कुमारस्य यथा षण्मुखानि सन्ति तथैव षट्संख्यान्दानवदलनदक्षान्दशनान(1.18)हं किं न दधामीत्यसूयया प्रभाववशाद्दन्तपञ्चकमाददानो मुखसदृशीकृतसमस्तशरीर(1.19) एकदन्त इव गन्धहस्ती समरेषु तमन्वगात् ॥ 56.

दिगष्टकं जेतुमशेषमंशुमा-
नवश्यमष्टैव(1.20) बभार वाजिनः .
इमं त्वमुष्मै प्रतिपाद्य सूनवे
ध्रुवं गतस्संप्रति सप्तसप्तिताम् ॥ 57.

⏑–⏑––⏑⏑–⏑–⏑–
⏑–⏑––⏑⏑–⏑–⏑–.
[विलङ्घ्यर्नायेन]⏑–[1]द्विहायसा
स्वकान्तिसर्वस्वं[मिवार्पितं दधत्] ॥

1 Is it 'त्रिश' ? 2 Ms. 'रोग'. 3 Ms. [2] to 'रा' Ic. under 125.

एकेनैके(l 21)नैक एको जीयत इति युक्तम् अतोऽष्टौ दिशो जेतुं सूर्योऽष्टे-वाश्वानवहत् अद्य पुनस्तेषामश्वानां(l 22) मध्यादेकमश्वं दत्वा सप्ताश्वतां सूर्यो गत इत्येवं कवीनां स्तुतौ योग्यो ह्यस्तमन्वगात् ॥ मयूरकण्ठ(l 23)सम-वर्णत्वात्संभाव्यते विलङ्घनीयेनाक्रमणीयेन व्योम्ना दत्तं निजद्युतिसर्वस्व-मिव दधत् ॥ 58.

विमुच्य(l.24)[ति दातुममुष्य?] —⏑—
⏑—⏑———⏑दधेः सुता मम .
इतीव बुध्या परिवर्ज्य कौस्तुभं
स्यमन्तकरत्ना(l.25··11)ङ्गभृता समर्पितः ॥ 59.

निषीथमार्तण्ड इति क्षमातले
प्रसिद्धनामा सकलेपि तं मणिः .
मृगा(l.1)ङ्कमौलेस्समभीर्ष्यया धृतः
पितेव चूडाभरणं व्यभूषयत् ॥

अस्य दातुं लक्ष्मीसहोदरः(l 2) मणिः कौस्तुभो मया यद्यपसार्यते तर्हि कौस्तुभसोदरी मह्यं कुप्यतीतीव बुद्ध्या कौस्तुभमदत्वा शार्ङ्गि(l.3)णा स्य-मन्तको दत्तः रात्रिरविरिति भूतले प्रसिद्धो मौलिभूषणभूतस्तथा चन्द्रमौलेः स्पर्धया हेतुभूतया(l 4) तेन पिता सूर्य इ[व] धृतः हरश्चन्द्रमौलिः अहं सूर्य-मौलिर्भवामीति स्पर्धया धृतः . स्यम(l 5)न्तकस्सुवर्णस्रावी जाम्बवज्जयप्राप्तो मणिः ॥ 60.

पतिर्धनानामजगन्धवासिना
शिवेन दत्तस्त्व इ(l 6)व स्वतस्सखा .
उपागतो वा स्वयमेव रक्षितुं
प्रतार्यमाणो नडकूवरभ्रमात् ॥ 61.

---

1 Ms. एके°. 2 Ms. °लङ्घ्य°. 3 Ms दत्त lc. under l.23. 4 Ms. पृ. रा. वि. on margin. 5 Sic, for spelling, cf. Rigveda, X. 72.8-9. 6 Ms. °स्समशीर्ष-काप्यत.. 7 Ms. मौ° to °त lc. at top of page.

क्रमेण दावाग्निरिवोदपीपद्-
द्धनं प्रजातापस(1.3)मापनं कुलम् ॥

समस्तां भूमिं निष्कण्टकां कृत्वा भूभृतो राज्ञश्च प्रतापेन धू(1.4)म्रां-
न्कृत्वा स धनमसंख्यं मेघं च प्रजातापनिवारकं कुलमजनयत्. अत ए(1.5)व
दावाग्निरित्युपमा ॥ 68.

समागतः पुष्करतीर्थयात्रा-
प्रसङ्गतः कश्चन काल(1.6)मुर्वराम्.
परीक्ष्य सर्वामपि योगिनां गुरु-
र्यथागतं भास्करमण्डलं ययौ ॥(1.7)

त्रिपुष्करे तीर्थे तीर्थयात्रया हेतुभूतया भूमिमागतः प्रसङ्गेन महीं प-
रीक्ष्य परिपा(1.8)ल्य स महायोगी यथागतं सूर्यमण्डलं प्रति गतवान्.योगी
च सूर्यमण्डलं(1.9) प्रविशतीत्यर्थच्छाया ॥ 69.

अचाहमानापि रराज मेदिनी
विगाहमाना रुचिरं(1.10) तदन्वयम्.
न वंशगुल्मेन तथा वनस्थली
यथा हि भग्नेन विभाति मौक्तिकैः ॥(1.11)

चाहमानरहितापि भूमिश्शुशुभे रुचिरमधिकं यतः तत्कुलं धारयन्ती.
अ(1.12)त्र दृष्टान्तमाह अत्र वंशगुल्मे भग्ने सति मुक्ताफलैर्वनभूमिर्यथा
शोभते(1.13) तथा वंशगुल्मेन न शोभते वनभूमिः ॥ 70.

काकुत्स्थमिक्ष्वाकुरघू च यद्दध-
त्पुराभ(1.14)वत्त्रिप्रवरं रघोः कुलम्.
कलावपि प्राप्य सचाहमानतां
मरुद्दर्तुयमव(1.15)रं बभूव तत् ॥

1 Text पुरान्. 2 Is it मानपा न° ? So comm. 3 Ms. परीक्ष्य twice.
4 Ms. उद°. 5 Ms. काकुस्त°. 6. Ms. °उर्.

श्रीराममिद्वाकुं रघुं च धारयद्रघोः कुलं यत्त्रयः प्रवरा (16) यस्य त-त्कृतयुगेभूत्तत्कुलं चाहमानभावं प्राप्य प्ररूढचतुर्थप्रवरं कलावभू(17)त्. प्रवराणां वैषम्यमेव भवति तत्कुलं तु प्रवरचतुष्टयसहितमभूदिति ॥(18) 71.

इतः प्रभृति प्रक्षेत्यन्तं कुलक्रम ॥

आदित्यरश्मिदुरतिक्रमपारियात्र-
पार्श्वान्तर(19··12)प्रतिदिनाध्वगकीर्तिकायाः.
सप्तार्णवीविषयशाश्वतवाडवाग्नि-
व्यापारपारगमनप्र(1)गुणप्रभावाः ॥

प्रवीराः चाहमानस्य कुलमभूपयन्नित्यन्वयः. आदित्यरश्मिभि(2)-र्दुरतिक्रमं दुर्लङ्घ्यं यत्पारियात्रकपार्श्वान्तर तत्र प्रतिदिनं पथिकः कीर्तिः कायो येषा(3) ते तथा सप्तसमुद्रविषयश्शाश्वतो नित्यो वाडवाग्नेर्यो व्यापारः ज्वलनं(4)तस्य पारगमने पराभवे प्रगुणस्समर्थः प्रतापो येषाम् ॥ 72.

दृष्टस्वपूर्वपुरुषो(5)दयभूप्रदेश-
सेनारजोभिभवखिन्नसहस्रनेत्राः.
अश्रान्तयज्ञशततर्पितहव्य(6)वाह-
शुद्धान्तगीतभुजसाहससंप्रदायाः ॥

स्वपूर्वपुरुषस्यादित्यस्योदयभू(7)प्रदेश उदयपर्वतो दृष्टो येन तस्य सेनारजसोभिभवेन खिन्नः खेदितस्सह(8)स्रनेत्रो यैस्ते. सहस्रनेत्र इति साकूतम्. तथा अश्रान्तं नित्यं कृत्वा यज्ञशतेषु तर्पि(9)तो यो हव्यवाहोग्निस्तस्य शुद्धान्तस्स्वाहा तया गीतो भुजसाहससप्रदायो येषां ते ॥(10) 73.

वैवस्वतायुधभुजङ्गमसह्यमान-
निश्श्रोत्रतानभिगतोर्ध्वचमूनिनादाः.

---

1 Ms पान° 2 Ms °रप्रप्र° 3 Ms पृ । न्र १४ on margin. 4 Copyist's remark तेनत्र ६ छक्त त्रस्य ३ि रसतमिद सपूर्ण पत्रग. 5 Ms. °लड्घ°. 6 Ms °त्यो यो. 7 Ms. °वाहाशु°. 8 Ms. तभुज°. 9 Ms °प्रराया. 10 Ms. °तोइ°.

ल(1.11)ञ्चाधिपत्यभयदानमयापदान-
वार्ताश्रुतिक्षपितनैर्ऋतचित्तदौस्थ्याः ॥(1.12)

वैवस्वतस्य यमस्यायुधैः पाशैर्भुजंगमैस्सह्यमानो यतो निष्कर्णतयानधिग(1.13)त उष्ट्रसंघर्षशब्दो येषां ते तथा विभीषणस्याभयदानरूपं यदपदानं साह्(1.14)सं तद्वार्ताश्रवणेन क्षपितं निवारितं चित्तदौस्थ्यं चित्ते क्षोभो यैस्ते. अयमर्थः(1.15) अस्मद्वंश्येन श्रीरामेणास्मै राज्यं दत्तमिति तैर्जिष्णुभिर्विभीषणस्याभयं दत्त(1.16)मतस्तत्पक्षभूतस्यापि नैर्ऋतस्याभयं गलितमिति··················(1.17)················ ॥ 74.

प्राचेतसप्रियतमासुरतान्तखेद-
निर्भेदवे(1.18)दिकटकद्विपकर्णवात्याः.
पूर्णोदरज्वलननिर्वृतिनिर्विकार-
सारथ्यमुक्त(1.19*)मरुदीरितसाधुवादाः ॥

प्राचेतसीनां प्रियतमानां वरुणस्त्रीनां सुरतान्तखेदस्य(1.1) निर्भेदं विदन्ति कुर्वन्ति. खेदहारिण्य इत्यर्थः. एवंविधाः कटकद्विपानां कर्णवात्या ये(1.2)षाम् तथा यज्ञेषु पूर्णोदरो यो ज्वलनस्तस्य निर्वृतिस्सुखं तया निर्विकारो यतस्सा(1.3)रथ्यमुक्तो यो मरुत्तेनेरितस्साधुवादो येषाम् ॥ 75.

कैलासशैलशिखराश्रयकि(1.4)न्नरेन्द्र-
कर्णामृतह्रदपराक्रमगीतशब्दाः.
ईशानचन्द्रसहवासमहाविदग्ध-
दोर्द(1.5)ण्डकीर्त्यधरितघुसरित्प्रवाहाः ॥

कैलासनिवासिनां सम्बन्धी कर्णयोस्सुधाप्रवाह(1.6)सदृशः पुरुषकार-

1 Ms. शब्ज°.  2 Ms. °नस°.  3 Ms. दोस्र्य !.  4 Ms. °पूनगग°.
5 Add नैऋतस्य.  6 Ms. येषां ते.  7 Is it निर्वृतिर्निर्वि !.  8 Ms. सप्रथ°.
9 Ms. प्राचेत°.  10 Ms. सुरत°.  11 Ms. वेदेन्त्.  12 Ms. स्वात्र°.  13 Ms. °मरुद्,

गीतशब्दो येषां ते तथा ईशानचन्द्रेण सहवासे महाविदग्धो दोर्द(1.7)एड-
कीर्त्या भुजयशसाधरितो जितो गङ्गौघो यैस्ते ॥ 76.

सेनाहयोद्गमितधूलिल(1.8)घूभवन्द्रू-
धृत्यल्पयत्नफणिशायितवासुदेवाः .
लक्ष्मीमुखोचरणलग्न(1.9)सुधासधर्म-
माधुर्यकीर्तिसुखितीकृतसप्तलोकाः ॥

एवमष्टदिक्पालप(1.10)राजयध्वननमुक्ता हरिसेवामाह सेनाश्वैरुत्था-
पिता या धूलिस्तया लघूभ(1.11)वन्ती या भूस्तस्या धृत्यर्थं धारणार्थम-
ल्पयत्ने फणिनि शेषे शायितो वासुदेवो यैस्ते(1.12) तथा अत एव लक्ष्म्या
मुखोचरणेनेव लग्नं सुधासधर्मामृतसमं माधुर्यं यस्याः(1.13) तया कीर्त्या
सुखीकृतास्सप्त लोका यैस्ते ॥ 77.

ब्रह्मारविन्दमकरन्दकणान्तरङ्ग(1.14)-
तौरङ्गधूलिविरसीकृतदिव्यभृङ्गाः .
श्रीचाहमानकुलमुज्ज्वलयांबभूवु-
र्दोर्म(1.15)एडनाभरणभूवलयाः प्रवीराः ॥

ब्रह्मकमलव्यापिवाजिरजोभिर(1.16)कालिकुलाः तथा दोर्मण्डलस्या-
भरणं भूवलयो येषां ते ॥ 78.

रिक्थक्रमादुप(1.17)[नतं] नलिनीभुजङ्गा-
दारभ्य यद्वसु ददुश्शरणागतेभ्यः .
वाणिज्यवर्धितमित्रानुदि(1.18)नं तदेषां
प्रापोत्तरोत्तरविशिष्टदशामवेशम् ॥ —

1 Ms. दाईण्ड. 2 Ms °वन्भू° 3 Ms. °देवः. 4 Ms. °खोचण°.
5 Ms °स्तया crossed. 6 Ms. प्रायोभुवेत्त°.

सूर्यजावं(रि)क्थक्रमादुपनतं प्रा(1.2)प्तं वसु तेजो धनं च ते शरणागतेभ्यो यद्ददुस्तद्वाणिज्येन व्यवहारेण वर्धितमिव तद्वसु उत्तरो(1.1)त्तरं विशिष्टदशाया अनुप्रवेशं प्रापत् ॥ 79.

वास्तोष्पतेस्समरपर्वसहायतार्थ-
मायासितैस्स(1.2)ततमूर्ध्वगतागताभ्याम् .
भेतमभोरसुशकैरपि नेतुमुर्व्या-
स्तैस्स्वेच्छयैव विदधे त्रिदिवे निवासः ॥(1.3)

वास्तोष्पतेरिन्द्रस्य सङ्ग्रामेषु साहायकार्थमूर्ध्वगतेनाकाशगमनेन तथा आगतेन आकाशाद्भूमावं(1.4)वरोहणेन च नित्यं खिन्नैः तथा यमस्यापि भूमेस्सकाशान्नेतुमशक्यैस्तैस्स्वेच्छयैव स्वयमेव स्वेन निवा(1.5)सः कृतः ॥ 80.

अष्टासु दिवपतिपुरेषु यथेष्टमेषां
रक्षःक्षयोपकृतये कृतिनां स्थितानाम् .
भूः स्तम्भि(1.6)ताष्टगिरिमण्डपदिग्द्विपेन्द्र-
स्तम्भाष्टकेन समपद्यत राजधानी ॥

अष्टसु लोकपालनगरेषु(1.7) रक्षसां विनाशेनोपकारार्थं स्वेच्छया राक्षसविनाशार्थं स्थितानामेषां चाहमानवंश्यानां राज्ञां भूमिः राज(1.8)धानी नगरी संपन्ना स्तम्भितान्यष्ट गिरय एव मण्डपानि येन तद्दिग्द्विपेन्द्राणामेव स्तम्भानामष्टं(1.9)कं यस्याः. *राजधान्याश्च मण्डपधारणार्थं स्तम्भा* अष्टौ भवन्ति ॥ 81.

वंशे तेषामशेषप्रथमनृपभुजां(1.10) कीर्तिसम्पद्वलाका-
मेमारम्भानुकूलच्छविसदसिपटाम्भोदविश्रान्तिशैलः .

---

1 Ms. °ष्ठंगर्दो°. 2 Ms has ग. शि १४ on margin. 3 Ms. °सुशकै°. 4 Ms. °रोहण. 5 Ms. °न रो°. 6 Ms. °स्तैस्से°स्से 7 Is it स्वर्गे ? 8 Ms. रक्षा°. 9 Ms. °स्तम्भ°. 10 Ms. रक्षस°. 11 Ms.°नो° to °ण° Ic. on margin. 12 Ms. राज°. 13 Ms. °ष्टक. 14 Ms.°भुजा°, Is it °भुजां ? 15 Ms. °रम्भ°.

कैलासोत्सङ्गस(1.11)ङ्गीतकसभिकशिवादिष्टगन्धर्वरामा-
गातव्योद्दामकर्मा समजनि वसुधावासवो वासुदेवः ॥(1.12)

तेषां कुले वासुदेवनामा राजा जातः . समस्तानामादिराजानां वा कीर्तिसंपत्सैव वलाका(1.13) वस्याः प्रेमारम्भे सन्सौधुर्योऽसिपटस्स एवाम्भोदस्तस्य विश्रान्त्यर्थे शैलः पूर्वेषां कीर्त्तिवर्धक(1.14) इत्यर्थः [तथा च] कैलासोत्सङ्गे सभिकेन शिवेनादिष्टाभिर्गन्धर्वरामाभिर्गातव्यान्युद्दामक(1.15)र्मोणि साहसानि यस्येति भद्रम् ॥ 8८.

श्रीलोलराजसुतपण्डितभट्टनोन-
राजात्मजो वि(1.16)वरणेन सुबोधमाधात् .
सर्गं द्वितीयमशनैरिह जोनराजः
पृथ्वीमहेन्द्रविजयाभिधका(1.17)व्यराजे ॥

पृथ्वीराजविजयविवरणे द्वितियस्सर्गः ॥

---

1 Ms. °तस°. 2 Ms. सन्माधु°. 3 Ms. °व्यान्तु°. 4 Ms. °राजविरचे.

## [ तृतीयः सर्गः ]

समभूद्य[दा स खलु दा](1.18)ननिधि-
र्ववृपुस्तदा सुमनसो जलदाः .
परिकम्पतां यशसि हानिभया-
त्सुरशाखिनां स्वय(1.19)मिव स्खलिताः ॥

यदा वासुदेवो जातस्तदा मेघाः कल्पवृक्षाणां पुष्पाणि ववृपुः . अत्र सम्भाव्यते य(1.20)तो दानेन निधिस्तो यशोविषये हानिभयात्कम्पमानानां कल्पवृक्षाणां स्वयं पतितानीव(1.21) . कल्पवृक्षेभ्योऽप्यधिकं दातेत्यर्थः ॥ 1.

ननृतुर्दिनं सकलमप्सरसः
परिदध्वनुर्विजयदु(1.22)न्दुभयः .
प्रमदं दधुर्यममृतोद्धरणा-
त्पुनरेव तं सुमनसोऽन्वभवन् ॥

अप्सरसो ननृतुः [पट](1.23*)हा दध्वनुः . सकलं दिनमित्यनेनोभयोर्वाक्ययोस्संबंधः . अमृतलाभेन देवा यं हर्षं प्रापुस्तज्जन्मना(1 1) पुनरेव प्रापुः ॥ 2.

द्युनदीहृतैः कनकतामरसै-
र्मरुतो वपुर्विरचिताभरणाः .
गगनात्मना शशिशिरो(1 2)मणिना
प्रकटीकृता कनकवृष्टिरिव ॥

गङ्गाहेमपद्मैः कृतभूषणा वायवो बभुः अतस्सम्भाव्यते(1 3) आकाशरूपेण शशिशेखरेण सुवर्णवृष्टिरिव मुक्ता ॥ 3.

---

1 Ms. °कम्पितां  2 Ms. क° to °दा Ic. under 1 19.  3 Ms. °स्तानि.
4 Ms. °दट°.  5 Ms. स्वर°.

दिवमुच्चकैरभृत तस्य यशो
जल(। 4)दैर्विना जलकणैः पतितम् .
परिपीडितादमृतदीधितितो
विनिरित्वरैरिव सुधापृषतैः ॥

तस्य(। 5) यशो द्यामपूरयत् मेघैर्विना जलकणैः पतितम् यद्यशसा पीडिताचन्द्रान्निर्गच्छद्भिरमृतकणै(। 6)रिव . इत्वरैरिति सृजीणशां क्वरप् ॥ 4.

सवितुः कुले कति न भूपतयो
भुजशालिनः समभवन्नपरे .
स(। 7) पुनर्यथा व्यवजहार तथा
न भगीरथो न सगरो न रघुः ॥

सूर्यस्य कुले परे कति न राजानो भुजाभ्या शो(। 8)भमानाः प्रागजाता. स वासुदेवस्तु यथा व्यवहारमकरोन्न तथा भगीरथादय. ॥ 5.

न स पर्वतो न त(। 9)दरण्यमभू-
न्नगरी न सा मरुमही न च सा .
स विनिर्ममे न खलु यत्र नृप-
स्सरसीः प्रपारसुरगृ(। 10)हाणि मठान् ॥

स राजा सरस्यादीन्यत्र नाकरोत्ते पर्वतादयो नाभवन् . सर्वेषु पर्वतादिषु सर(। 11)स्यादीन्कृतवानित्यर्थ. ॥ 6.

न शिखण्डिनो जलधरं प्रथमं
न चकोरकाश्शुचिनिशाशशिनम् .
न पिका(। 12)स्तथा तरुणमाम्रवनं
जहृपुः प्रजास्तमवलोक्य यथा ॥

---

1 Sic. cf Pānini 3 2 163 इण्नशजिसर्तिभ्य क्वरप् Katantra 4 4 48 सृजीण्नशां क्वरप्  2 Ms °त° le under l 11  3 Read °वण ( Panini, 8 4 5. )

• यथा तं दृष्ट्वा जनास्तुतुपुस्तथा न म(113)यूरादयो मेघादीन्दृष्ट्वा तुष्यन्ति. मेघादिभिरिव मयूराद्यस्तेन प्रजा दत्तवृत्तय इत्यर्थ. ॥(114) 7.

न हिमाद्रिणा मलयजेन तथा
शिशिराभवच्चिरमनेन यथा .
न सुमेरुणा न मणिभूमिभृ(115)ता
वसुमत्यपि क्षितिरनेन यथा ॥

यथानेन राज्ञा हततापा भूरभून्न तथा हिमाचलचन्द(116)नाभ्याम् . यथामुना भूर्धनवत्यभून्न तथा सुमेरुरोह[णाभ्याम्] ॥ 8.

[कमलालया]⌣⌣पती क(117)[मला]
[प्रविहाय] यागतवती नृपतीन् .
कमलोपमादपि तदङ्घ्रियुगा-
त्प्रणिपत्य तां पुनरवापु(118)रमी ॥

या लक्ष्मी राज्ञस्त्यक्त्वागतवती ताममी अपि राजानस्तत्पादपद्मद्वयं प्रणम्य ततः प्रापु . अ(119)त एव कमलालयेति विशेषणमर्थवत्. तत्सेवकानामेव राज्ञा श्रीरासीन्नान्येषामिति भावः ॥(120) 9.

मखभूमिगैरशतमखमुखै-
रुदन्यतो दिगधिपप्रमदाः .
मखधूम्यया निरपवादमतः(121)
परिबभ्रमे हि ततदिक्कटया ॥

अस्य यज्ञगतैरिन्द्रादिभिर्हनुभिस्तद्भार्या अरुदन्नुदन्तीति य(122)ज्ञावमिति शेष. अतस्तन्मखधूमजालेन न्धाक्रिर्दिगन्तेन निरपवाद कृत्वा भ्रान्तम् . अयमर्थ (12 ) मख[धूमेनैव] लोकपालभार्या बाष्पनिर्गलनमभू[त्]

---

1 Ms. [illegible]. 2 Ms. [illegible] 3 Ms. [illegible] 4 Ms. [illegible] under 1. 14
5 Ms. [illegible] 6 Ms. [illegible].

लोकास्त्वजानन् चिरं पतिप्रवासो वाष्प(l.24**14)हेतुरिति न तु स तासामभूत् तद्यज्ञेषु इन्द्रादीनां पोपलाभात् अतो यज्ञधूमेन दूषणं न प्राप्तम् ॥(l.1)¦10.

सुरसद्मनामविरतापचितौ
द्रुममस्तके न कुसुमं ददृशे .
अपरागिणं विदधिरे पवनं
नभसा गतं क्वचन नोपवनम् .

अपरागवानपि वहन्नशनैः
पवनोभवत्क(l.2)चन नोपवने ॥

देवानां नित्यपूजायां सत्यां तरुविटपेषु पुष्पं न दृष्टम् ततो हेतोः काप्युद्याने जना वायुस(l.3)परागिणं सदोषं न विदधुः . परागाभावेप्यपरागिणं न विदधुरिति विभावना . कचित्

अपरागवान(l.4)पि वहन्नशनैः पवनोभवत्कचन नोपवने

इति पाठः ॥ 11.

चरणैस्त्रिभिस्त्रुटितसंघटितै-
र्व्यहरत्सु(l 5)खं स्मरहरस्य वृषः .
पदमुद्रिता नियतमस्य सदा
न हिरण्मयी न समपादि मही ॥

स्मरहरस्य(l 6) वृपो धर्म्मस्सुखेन व्यहरत् . अत्र हेतुः त्रिभिः पादैः पूर्वं विच्छिन्नैरद्य संघटितैश्चतुष्पाद् धर्मोभूदित्य(l 7)र्थः नूनमस्य वृपस्य चतुर्भिः पादैः कृतमुद्रत्वाद्भूस्सुवर्णमयी संपन्ना . खनिस्थानेषु भूस्सुवर्णमजी(l.8)जनदित्यर्थः . हरवृपो यत्र संचरति तत्र जातरूपं जायत इत्यागमः ॥ 12.

---

1 Ms. पृ. रा. वि. १६ vertically on margin. 2 Ms. अप° to °वनम्, lc. on margin; this reading is commented upon, and the next one, though in Ms, is mentioned by comm. as *var. lect.* 3 Ms °गिणा. 4 Ms. °दैपृ°. 5 Ms. °रव°.

चक्षुमशक्यं दार्ढ्यगुणं भूर्लेभे मूषका भू(1.5)मि न खनितवन्तः अत इव विच्छिद्रां भूमिमापदां गणा नैवाच्छादयन् ॥ 19.

शुकवाहने सततत्प्तमये(1.6)
न दधुश्शुकाः क्वचन शालिभयम्.
क्रतुधूमतो दिशि दिशि प्रसृता-
दुपलेभिरे न विषयं शलभाः ॥(1.7)

शुका वह्निवाहा इत्यागमः. शुकवाहनेनले नित्यतृप्ते इवं शुकाश्शालीनां भयं न दत्तवन्तः. तेषां पावकतृप्तौ(1.8) सत्यां तृप्तत्वात्. सर्वदिक्षु विसारिणो यज्ञधूमाद्धेतोरिवं शलभा आश्रयं न लब्धवन्तः ॥ 20.

न निवेशितैर्गि(1.9)रिगुहासु तथा
न तथा पुरं पितृपतेः प्रहितैः.
चरणाग्रगैर्नृपतिभिर्नृपति-
स्स यथा प्रजासुख(1.10)वतीरकरोत् ॥

प्रणमितै राजभिस्स राजा प्रजास्सुखिला यथाकरोत्तथाद्रिगुहासु प्रवेशितैः(1.11) तैर्नाकरोत्तथा न च यमपुरं विसृष्टे राजभिरकरोत्. पलायितानां पुनरुदयाशङ्कया मारितानां(1.12) ये मुक्तास्तेषामुदयाशङ्कयेति भावः॥ 21.

उपयोगवान्यदि रणार्थमभू-
त्स्वयमेव तन्मखमहीष्व(1.13)वसत्.
भुजयोर्बलादभयदानपतिं
दनुजागमे तमनयन्मघवा ॥

इन्द्रो वासुदेवस्य रणार्थमुपयोगी(1.14) यद्यासीत्तदा इन्द्रस्तदीययज्ञ-

1 Ms. °निभ्वे. 2 Ms. इव ic under l 7. 3 Ms. °िव ic. under l. 8.
4 Ms. °गुरव

देवगृहकृते पर्वताना शिला खण्डिता समिद्थें च वृ(1 19)त्ता दारिता चित्रार्थं गैरिकादय उद्धृतास्ततस्सर्वे पर्वता क्षितिमल्पप्रमाणत्व प्रापु ॥ 16.

मुहुरीत(1 20)यः प्रविविशुर्न भुवं
भुवनान्तरे क्वचिदिवात्तपदाः
यदि वा क ता विरचयन्तु पद
परिपूरितास्सुकृतिभि(1 21)र्हि दिशः ॥

ईतयोतिवृष्ट्यादयो भुवन न प्राविशन् अतस्सभाव्यते काप्यन्यस्मिन्भुवने कृतास्पदा अथ(1 22) वा नैतत् कस्मिन्भुवने ईतय पद कुर्वन्तु हिर्यस्माद्र्थे तदीयाभिस्सुकृतिभिरशोभनै कर्मभिर्दि[श पूरि](1 -3)ता ॥(*) 17.

अतिवृष्टयो ववृधिरे सजलै-
र्नयनैः पर रिपुकुरङ्गदृशाम् -
अनवग्रह खमपि सत्पुरुषाः
प्रतिपेदि(1 1)रे सततभाग्यमयाः ॥

रिपुस्त्रीणा सबाष्पैर्नेत्रैरतिवृष्टय पुष्टा नित्यभाग्यमयास्सत्पुरुषाः खमाकाशम(1 2)नवग्रहमवृष्टिप्रतिबन्ध प्रतिपन्ना अविद्यमानो नवो ग्रहो नैयत्येन विसर्गो यत्र तत्ख सवित्स्वभाव प्रतिपन्ना (1 3) नवग्रहरहित खमिति विरोध ॥ 18.

क्षितिरग्रहीत्कमपि दार्ढ्यगुण
क्वचिदाखवो न खलु चक्रुरमूम् (14)
अत एव ता परमनिर्विवरा
विपदा गणा न परितस्तरिरे ॥

---

1 Ms च lc under l 20 2 Ms न lc under l 21 3 Ms या पुष्ट (?) 4 Ms स्सु

वक्तुमशक्यं दार्ढ्यगुणं भूर्लेभे मूषका भू(15)मिं न खनितवन्तः अत इव विच्छिद्रां भूमिमापदां गणा नैवाच्छादयन् ॥ 19.

शुकवाहने सततवृप्तिमये(16)
न दधुश्शुकाः क्वचन शालिभयम् ·
ऋतुधूमतो दिशि दिशि प्रसृता-
दुपलेभिरे न विषयं शलभाः ॥(17)

शुका वह्निवाहा इत्यागमः . शुकवाहनेनले नित्यतृप्ते इवं शुकाश्शालीनां भयं न दत्तवन्तः . तेषां पावकतृप्तौ(18) सत्यां तृप्तत्वात्. सर्वदिक्षु विसारिणो यज्ञधूमाद्धेतोरिवं शलभा आश्रयं न लब्धवन्तः ॥ 20.

न निवेशितैर्गि(19)रिगुहासु तथा
न तथा पुरं पितृपतेः प्रहितैः .
चरणाग्रगैर्नृपतिभिर्नृपति-
स्स यथा प्रजास्सुख(1.10)वतीरकरोत् ॥

प्रणमितै राजभिस्स राजा प्रजास्सुखिता यथाकरोत्तथाद्रिगुहासु प्रवेशितैः(1.11)तैर्नाकरोत्तथा न च यमपुरं विसृष्टै राजभिरकरोत्. पलायितानां पुनरुदयाशङ्कया मारितानां(1.12) ये मुक्तास्तेषामुदयाशङ्कयेति भावः॥ 21.

उपयोगवान्यदि रणार्थमभू-
त्स्वयमेव तन्मखमहोव्व(1.13)वसत् .
भुजयोर्बलादभयदानपतिं
दनुजागमं तमनयन्मघवा ॥

इन्द्रो वासुदेवस्य रणार्थमुपयोगी(1.14) यद्यासीत्तदा इन्द्रस्तदीययज्ञ-

---

1 Ms. °निभये. 2 Ms. इव lc. under 1. 7 3 Ms. °(तृ lc. under 1. 8.
4 Ms. °इव

भूमिपु स्वयमेवावसन् दानवयुद्धागमे तमिन्द्रो भुज(l 15)रतोनाभयदाता-रमनयत ॥ 22

व्यसनैरसावतितरा मलिनै-
रपि सप्तभिस्स्वयमधो विहितैः (l 16)
⏑⏑–⏑–स[क]लदिग्विजय
[तु]रगैरिव⏑भल–⏑⏑मान् ॥

.. [स]प्तभि (l 17) 23.

[Lines 18, 19 missing]

त्र⏑–नेनं सा वसुमती विदधे ॥

स राजा भुजबलेन यद्भूमिं धृतवास्ततो हे[तो] . (l 20) . सत्यार्थोभूत् क्षितिं बिभ्रतीति व्युत्पत्तिर्भूपाभूत् भूर्वसुधा सत्यार्थतामधात् यतोनेन राज्ञा भूर्वे(l 21)सुन्धरा वसुमती सर्वेजास्सधना च कृता स राजैव भूमेर्वसुभूत आसीदित्यर्थ ॥ 24.

नृहरिस्स्वयं(l 22) [स वसुधा यदधा-
दजहुर्म]दं तदिति दिक्करिण
अनहङ्कृतिं [फणि]पतिं व्यदधा-
त्कलिपन्नगे(l 23)⏑⏑⏑–⏑⏑– ॥

[नराणा]मध्ये हरिस्सिंहो ना चासौ हरिस्तरुणसिंहश्च स भूमिं यद-धात्त(l 24) मुद्वहनाधिकारहरणादिति भाव सिंहे च सति गजा मद त्य(l 25**15)जन्ति सं भूमिं यदधात्तत एवं शेपमनहङ्कृति निरहङ्कारमकरोत् कालसर्पे गरुत्मता(l 1) राजा यदि वहत् भुवो दुरित-

1 Ms नन Is it तन्नन ? 2 Ms त्रिभृ 3 Ms जाह 4 Ms नहुकृति. 5 Ms मर्तें 6 Is it द्विजपातविंहत ? 7 Ms has पृ वि १७ vertically on margin 8 Ms स to व crossed 9 Ms निहङ्का 10 Is it वृहद्भु° or वह भु ?

भारं यन्न्यवर्धयदलघूर्भवंर्ता[3] भूमि वहञ्शेषो नि(1.2)रहङ्कारो जात इत्यर्थः
······ ·· ·· ·· ····· (13) ·· ··फणिमारणात्फणिपतिस्तुष्यतीति
चित्रम् ॥ 25.

भुवमुद्धरन्नजनयन्नरकं
प्रममाथ तं मधुरिपु(14)श्च पुनः ·
स पुनस्तथा त्रिदिवमर्जितवा-
न्क्रतुभिश्च तं सुवसतामनयत् ॥

भूमिमुद्धरन्मधुरिपुर्नरकमु(15)दपादयन् ततस्त एव नरकं हतवान्
स राजा पुनर्भूमिमुद्धरन्निरुपद्रवां कुर्वंस्तथा स्वर्गमर्जि(16)तवान्स तं स्वर्गं
यज्ञैस्सुवसतां यथानयत्. यज्ञतृप्ता देवास्स्वर्गे सुखमासन्नित्यर्थ. ॥ 26.

अतिसं(17)कुचत्पदयवैस्सकलै-
र्यमधस्स्थितो वहति कूर्मपतिः ·
उपरि स्थितस्सकलभूमिभृतां
स विकस्वरः (18)क्षितिभरं तमधात् ॥

भूमेरधस्स्थित. कूर्मराजोङ्गैस्सङ्कुचन्य वहति तमेवाय राजा राज्ञामु-
परि स्थि(19)तस्स राज्याङ्गैर्विकसितोवहत ॥ 27.

अवहेलया यदकरोत्स किम-
प्यतिदुष्करं किमपि येन विधेः(110) ·
तत एव न ध्रुवमपत्रपया
तदधिष्ठितां स वसुधामरिशत् ॥ 28.

यदि वा शुचेरजनि यस्य कुले
स निधे(111)र्गतिः परिभवेप्यभवत् .

1 Is it 'न्यवर्धयत्पूर्व' ? 2 Ms 'वर्ता' 3 Ms 'शतरं' 4 Ms. 'नद्'.
5 Ms 'श्रपा. 6 Ms 'मविग', See Comm 7 Ms 'पे न'

भगवान्स्मरत्नुपकृति न तत-
स्तदलङ्कृताः परिबभूव दिशः ॥

सोयत्नेन यत्सम(1 12)पादयत्तद्विधिनापि कर्त्तुं यद्दुष्करम् अत एव लज्जया . ध्रुवं सभावनाया . स विधिस्तदाश्रितां भुवं(1 13) नारिशद्धिसितवान् . रिश हिंसार्थस्तौदादिकः . अविशादिति पाठश्चिन्त्यः अनुकूलस्य विधेः प्रवे(1 14)शस्य विवक्षितत्वात् वक्ष्यमाणपक्षान्तरस्यान्वयाभावाच्च ॥

यदि वेति पूर्वसम्भावनायाः पक्षा(1 15)न्तरमाह - यस्य कुले जातस्स चाहमानो विधेरसुरैः परिभवे शरणमभूत् तस्माद्धेतोरुपकारं स्म(1 16)रन्भगवान्विधिस्तद्भूपिता दिशो नाव्यथयत् . 29.

सोर्ध्वर इत्यन्त कुलकम् ॥

चरणेपि यो मदनुगं व्य(1 17)थये-
न्मुखभञ्जनं सुकरमस्य मया .
इति ते कथां स्मरति धर्मपरां
न कलिर्मुखं क्वचन दर्शयते ॥(1 18)

यो मत्सेवक पादेपि व्यथयेत्तस्य मुखभङ्गो मया क्रियते इमां धर्मनिष्ठां तव प्रतिज्ञा यत्स्मरति ततो नू(1 19)न कलिर्मुख क्वापि न दर्शयते . कलिना हि त्वदाश्रितो धर्म पादेखण्डयि(?) इति भाव ॥ 30.

तव पा(1 20)दयोरपसृतास्सविधा-
द्व्यविह्वलाः [पुनर]भाग्यशतैः .
अतिरोहिताः कमलया क्षितिपाः
प्रति(1 21)जज्ञिरे तदनु पस्पशिरे ॥

1 Ms °स्तरङ्कृ° 2 Ms °पादत्त° 3 Dhatupatha, Tudādi,140 4 Ms यस्य स कु° 5 Ms °ता दिरिशो 6 Sic Evidently verse 38 is meant but metre does not allow that to begin with सो° 7 Ms °थैयन् 8 Ms °येद° 9 Ms °हल°.

तव पादयोस्समीपान्नष्टा अत एव भीता अभाग्यशतैर्लब्द्म्यानाच्छादि(1 22)ता राजानो नूनं परिज्ञाताः [ज्ञानस]मनन्तरमेव पस्पशिरे बाधिताः……………………अपसृतैः(1.23) भयविह्वलैरिति तृतीयाबहुवचनान्तः पाठश्चिन्त्यः. पस्पृशिरे स्पृशेश्च पाठो विमृश्यः. पस्पशिरे (1.24*) [इति स्पश वा]धने इत्यस्य लिटि रूपं. राजद्रुहं परिज्ञाय लोका बाधन्ते ॥ 31.

भविता पुरस्सहचरैर्द्विपतां(1 1)
वरिवस्यतां नृप भवच्चरणौ.
इति सूचितं खलु तवैव नखै-
र्यददर्शयन्प्रतिनिधीननुगान् ॥

हे नृप त्वत्पा(1.2)दौ शरणीकुर्वतां शत्रूणां सहचरैः पुरो भविता भविष्यते इत्येतत्त्वन्नखैरेव सूचितम्. अत्र साध्ये साधन(1.3)माह. भवन्नखाश्शत्रूणां प्रतिनिधीन्प्रतिबिम्बाञ्शत्रूणामनुगानदर्शयन् भवन्नखेषु निर्मलत्वा(1.4)न्नमन्तो भवद्द्विपः प्रतिबिम्बिताः ते प्रतिबिम्बा भवच्छत्रूणां सहचरा पुरो वर्तन्ते इत्यर्थः. त्वत्पादसेवका(1 5)नां सहचरसामग्री भवतीति भावः ॥ 32.

न हिमालयो न हिमवत्तनया
न हिमद्युतिर्न हिमशैलनदी.(1 6)
हिमवत्सखो न च हिमाद्रिनृपो
हरहृष्टये तव यशांसि यथा ॥

यथा त्वद्यशांसि हरस्य हर्षाय तथा(1 7) न हिमालयाद्याः भवद्यशोभिर्विश्वस्य पालनादिति भावः. 33.

हृदयङ्गमं न जलजन्म विधे-
[र्न] म(1 8)[धु]द्विपो भुजगतल्परुचिः.

1 Ms. नून॰. 2 Ms. ॰ज्ञात॰. 3 Ms. पस्पशि॰. 4 Dhatupatha, Bhū-adı, 912. 5 See note 4,p.71. 6 Ms. भावि॰. 7 Ms. ॰भ्रमनो॰. 8 Ms. नवदि॰. 9 Ms. ॰न्नेस॰. 10 Ms. नदि॰. 11 Ms. ॰मेन.

स्फटिकाचले न च शिवो रमते
तव कीर्त्तिभिस्स यदि सर्वगतः ॥

विधेर्न(1 9)ह्मण पुण्डरीक हद्म तथा ध्रुवन्न भवति विष्णोश्च तथा शेषशय्याभिलापो न भवति कैलासशैले च तथा हरो न भवति(1 10) यदि यस्मादर्थे स ब्रह्मा हरिर्हरो वा तव कीर्त्तिभिर्हेतुभिस्सर्वगतो रमते त्वत्कीर्त्ति सर्वगता द्रष्टु(1 11) स भ्रमतीति पुण्डरीकादौ न रमतीति भाव ॥ 34

पृथिवी त्वया फलवती विहिता
ऋतुभिर्हि ते जल(1 12)मुचो जलदाः .
उपतिष्ठते हविरिनं ज्वलना-
त्परिपूर्यते द्विजपतिश्च ततः ॥

त्वया भूर्बहुफला सम्पा(1 13)दिता यतो यज्ञैर्हेतुभिर्मेघा वृष्टिममुचन् हविराहुतिरिनमादित्यमुपतिष्ठते अग्नौ प्रास्ताहुति(1 14)स्सम्यगादित्यमुपतिष्ठते इत्यागमात् ततश्चन्द्रश्च पूर्णो भवति 35

[उ]दरंभरिस्तव शिखी यजनैः(1 15)
[सु]हृदस्सुखा ‿ मुवहत्यनिलः .
न विभाति खं न निगमध्वनिना
य[जमा]नता न भवता न धृता ॥

त्वत्कर्तृ(1 16) [उ]दर विभर्त्ति पोपयति -
ग्रेंसुखाद [निग]मशब्देन ख(1 1.) न [न शो]भतेपि तु शोभते
भवता यजमानभावो न न धृत ॥ 36.

इ‿—‿—‿‿‿—‿‿ती[11]-
जगदु[हिं या](1 18)स्त्रिजगतीप्रकृतीः .

1 Ms प्पु 2 Ms त to व lc nder 1 9 3 Ms तया lc under 1 9
4 Ms तया lc under 1 10 5 Ms निं स्सव 6 Ms पान्द 7 Manu 3 76
8 Ms धता 9 Ms मस्स 10 Ms ।भत 11 Ms तीत्र्.

यद्वि ता भवानुपकरोति सदा
तदलं सुरैर्भवत एव [न]मः ॥

त्रिजगत्याः प्रकृती(l.19)रुपादानकारणानि सतीर्विभोः परमेश्वरस्य मूर्त्तीर्भूम्यादिका या जगदुस्ता इ‥‥‥‥‥(l.20)भवान्नित्यं यदुपकरोति वत्किं सुरैः न तान्नमस्यामः तुभ्यमेव नमः ॥　　　37.

⏑ ⏑ – ⏑ – ⏑ ⏑ ⏑ –(l.21)⏑ रितै-
र्विनमन्मुखश्चिरमभूद्वचनैः.
न परीत्त्यत्तां कथमसौ पृथिवी-
परिपा[ल]– ⏑ ⏑ ⏑ –(l.22)⏑ ⏑ कम् ॥

ब्रह्मप्रोक्तैः पू[र्वोक्तै]र्वचनैस्स्तवै‥‥‥‥‥‥‥‥(l.23**1) 38.

* * * * * * * * * * *[2]

1 Ms. पु. रा. वि. vertically on margin.

2 Copyist's remark—इत ऊर्ध्वं द्विवाणि पत्राणि प्रायो गलितानि.

# [ चतुर्थः सर्गः ]

* * * * * * *[1]

हामदभृतोप्यवमन्यमाने .
देवस्स तार्क्ष्य इव वाजिनि वासुदेवो
हन्तव्यमृत्युमुखसंमु[खदुष्टसत्वः].(11)

स वासुदेवस्तेन भ्रात्रान्वितो निरगात् कीदृशः सुखा सुखावहा गति- ]
र्यस्य तस्मिन्नश्वे निषण्ण[: मत्तह](12)स्तिनो जितवति हन्तव्यानि मृत्युमुखा-
नि संमुखं दुष्टसत्वानि येन सः. मृत्युमुखानीति दुष्टसत्व·········(13)-
पः. यथा तार्क्ष्ये गरुडे निविष्टो वासुदेवो नारायणो निरगात् नागा भुजगाः
दुष्टसत्वा दैत्याः शोभना [ग](14)तिर्यस्येति च ॥ 1.

एतन्न कौतुकविधायकमादिदेवो
यदद्रिवासरुचिरेति किराततीलाम् .
चित्रीयते त्व(15)वनधीरपि वासुदेवो
लीलाकिरातसरणिं स यदाललम्बे ॥

अद्रिवासे रुचिर्यस्य स आदिदेवो गिरि[शो] (1.6)यत्किरातरूपमवहत्त-
न्नाश्चर्यम् अद्रिस्थानां किरातग्रहणोपपत्तेः इदं तु चित्रीयते आश्चर्यं भव-

1 Copyist's remark at the top of the page—भग्न पत्रस्य स्थानं सम्यक् निखेतुं न शक्यते. 2 Restore भ्रात्रान्वित. सुखगतौ निरगमितस्ततो नागन्महा°. 3 Ms. दुवं°. 4 Ms. नाना. 5 Read किरातरूप°.

[ति] (1.7)यन्नवनंधीर्यस्य अवने रक्षणे धीर्यस्येति च स राजा लीलया किरा-
तत्वमग्रहीत्. चित्रङ आश्चर्ये इति क्यच् ॥ 2.

सर्वा[भिरेव] (1.8)मृगजातिभिरैकमत्यं
निर्माय मानमवधीर्य पशुत्ववृत्त्या.
अग्रे विसृष्टमभयार्थितयेव रंहः[5]
स[र्वस्वभूत](1.9)महरन्नृपतेस्तुरङ्गः ॥

पशुभावेन मानं त्यक्त्वा साम्मत्यं कृत्वा सर्वाभिर्मृगजातिभिरभया[र्थि-
तया] (1.10)प्रहितं सर्वस्वभूतवेगं राजाश्वोहरदित्युत्प्रेक्षा. अयमर्थः राजाश्वं
दृष्ट्वा मृगाणां वेगो नष्टः·········(1.11)हृते अभयाभिलापाद्राजाश्वस्य मृगै-
स्स्ववेगो दत्त इत्यर्थः[6] ॥ 3.

स भाविशद्वन[भुवं वनदेवतानां]
[संगीत](1.12)केषु दधतीं सुखितोपविष्टम्.
उन्मालकाय परिपूर्णफलैर्विमुक्तैः
प्रा[णैरिव]⏑ ⏑ ⏑ – ⏑ – ⏑ – (1.13) यूथम् ॥

वनदेवतानां सङ्गीतेषु सत्सु निश्चलं सुखितयोपविष्टं मृगकु[लं]······
·········(1.14)ष्टः अतस्संभाव्यते प्राणानां संपूर्णफलत्वादुन्मालकाय
प्रसाददे···र्थै[7] त्यक्तैः प्र[ाणैस्त्यक्त](1.15)प्राणो हि निश्चलो भवति ॥ 4.

आकस्मिकं निपतितं परमान्नपात्रे
पाषाणखण्डमिव – ⏑ ⏑ – ⏑ – .(1.16)

---

1 Ms धीर्यं° to °ने lc on margin. 2 Ms. धीयु°. 3 Ms °श्वन्.
4 Ms क्यम् cf Patanjali's Mahabhashya on Panini, 3 1.19 ( नमोवरिवश्चित्रङः
क्यच् )-क्यजादिषु प्रत्ययार्थनिर्देशः कर्तव्यः। नमसः पूजायाम्। वरिवसः परिचर्यायाम्। चित्रङ आश्च-
र्ये। etc. This sūtra is quoted by Jonarāja in his comm. on Shrikantha-
charita,16.48, as नमस्तपो(sic)वरिवश्चित्रङः क्यच्, thus doing away with Vārtika
तपसः परस्मैपद च on Panini,3.1.15. वरिवस परिचर्यायामिति क्यच् occurs in the same
at 19 38. 5 Ms. रंह°. 6 Ms. lc. mark but no lc. 7 Is it दानार्थं ?

———⏑——⏑णविघ्नमवाप्य वाजि-
कोलाहलं मृगकुलानि मुखान्यधुन्वन्

(117) 5.

[Lines 18 to the end of page missing](*)

वां मृगाणा प्रसाद इव कृत इत्यर्थ ॥ 6.

नीलोत्पलभ्रमवशाद्भ्रमतामलीना-
माराद्नूदितगताग(11)[त]या दृशैव ·
उत्थानविघ्नजननीं श्रवणामृतौघे
मङ्क्त्वा स्थिता श्रवणशक्तिमिवोद्धरन्तः ॥

दृष्टौ नीलोत्प(12)लमिति भ्रमता भ्रमराणा गतागतानुवादिन्या . गीतप्रियत्वादितिभाव दृष्ट्यैव श्रुतिशक्तिमिवोद्धरन्त (13) श्रवणामृतप्रवाहे निमज्ज्य स्थितामुत्थाने विघ्न कुर्वतीम् आकर्णनामृते मग्ना श्रुतिशक्तिमुद्धर्तुमिव द(14)ष्टि व्यापारयन्तीत्यर्थ . यश्च घटादिक कूपादिकादुद्धरति स गतागतानि करोति ॥ 7.

तालोद्गमैः खुरपुटा(15)हननेन भूमे-
र्ग्रैवेयगुञ्जितगुणेन च वाहनानाम् ·
वीक्ष्यास्यमात्रमपि किंपुरुषभ्रमेण
गन्तु व्यलम्बिप(16)त मन्दधियः कुरङ्गाः ॥

भुव खुरघातेन तालोच्चारणैरश्वाना ग्रीवालङ्करणशब्देन चाश्वाना मुखमात्रद(17)र्शने गीतप्रियत्वेन . न्शोनन्यव्यापारत्व हेतु . गायता मुखानि लोका पश्यन्तीति वस्तुस्थिति . मुखमात्रद(18)र्शनेन किन्नरभ्रान्त्या मन्दभया इव मृगा ॥ 8.

1 Is it धात्रा ? 2 Ms °दरन्तुम 3 Ms °स्यता° 4 Add गउ
व्यलम्बिषत

नानाविधश्रुतिसुखाहृतशब्दसार-
सारङ्गमांसरसनाभ्यस(1.9)नानुभावात् ।
संक्रान्तगीतसमया इव सर्वगात्रे-
ष्वारेभिरे किमपि कर्णसुखं शबर्यः ॥

शबर्यः किरातवध्वः कर्णसुखं प्रारब्धवत्यः । नानाविधश्रुतिसुखकारी आहृतश्रुतशब्दसारो यैस्ते सारङ्गा मृगास्तेषां मांसस्य(1.11) रसनं प्रसनं तदभ्यासातिशयात्संक्रान्तः परिणतो गीतसमयो यासां ता इत्युत्प्रेक्षा ॥ 9

व्याधाङ्गनाभिर(1.12)थवा वनदेवताभि-
र्यद्गीयते किमपि तच्चरितं मदीयं ।
किं हेतु कर्तृपदवीमिदमेति मृत्यो-
रित्येष भूप(1.13)[तिरदाद]भयं मृगेभ्यः ॥

किरातस्त्रीभिर्वनदेवताभिश्च किमपि लोकोत्तरं तत्प्रसिद्धं मदीयं च- (1.14)[रितं गीयते] तन्मृत्योर्हेतु कर्तृत्वं किमेतीति स मृगेभ्योऽदादभयम् । मद्गीतश्रवणश्रद्धयानपसरतां(1.15)............[म]रणद्वारं माभूदित्यभयं ददावित्यर्थः ॥ 10

प्राणावसानसमयेऽप्यपतिष्यमानं
दृत्वा(1.16)

दर्भाङ्कुरेषु मृणालभ्रान्त्या हेतुभूतया दर्भाङ्कुराञ्जिह्वया लिहतो जिह्वायां पद्मपत्रभ्रान्त्या जिह्वां दशनैर्लिह(1 2)तः दूरावनम्रैर्वदनैरुन्नमनात्क्रमेणात्ताः पीता मातृस्तना यैस्तान्वराहपोतान्स नावधीत् ॥ 12.

नैसर्गिकावि(1 3)चलवर्णगुणस्य यत्न-
निष्पन्नवर्णगुणसङ्गमसुत्यजेन ·
दिग्वाससेव कृशशास्त्रमुखेन देवो
बाधां द्विज(1 4)स्य शिखिनो विशिखेन नैच्छत् ॥

स्वाभाविकोऽविचलः स्थिरो वर्णगुणो नीलपीतादिर्यस्य द्विजस्य मयूरा(1 5)देः पक्षिणो राजा बाधां नाकरोत् केन यत्नेन निष्पन्नो निष्पादितो यो वर्णो गुणसंगमस्तेन हेतुना सुत्यजेन विशिखेन. वि(1 6)गलिता लुञ्चिता शिखा केशा यस्य तेन शिखिनश्चूडावतो द्विजस्य कस्यचिद्बाधां नेच्छति अविचलो वर्णो (1.7)ब्राह्मणत्वं गुणः पाठादिश्च यस्य यत्नेन निष्पन्नो वर्णगुणो ब्राह्मणगुणः पाठादिस्तेन सुत्यजः. कृशं शा(1 8)स्त्रं यस्य तन्मुखं यस्य अल्पशास्त्रज्ञेनेत्यर्थः ॥ 13.

यत्पुण्डरीकमवधीत्तत एव चन्द्रा-
पीडोयमित्यधिजगाम यश(1.9)स्स राजा .
दूरं गतस्तु मृगयाव्यसनेन चित्रं
कादम्बरीं न मनसापि कदाप्यपश्यत् ॥

स राजा पुण्डरीकं व्याघ्रं(1 10)मुनिपुत्रं च यदाहिंसीत्ततोयं राजा चन्द्रापीड इति प्रसिद्धिं प्राप्तवान्. चन्द्रापीडो राजा पुण्डरीकं मुनिपुत्रं हतवान्(1 11) अयं च पुण्डरीकं व्याघ्रं हतवान् इति चन्द्रापीड इति प्रसिद्धिं प्रापत्. आखेटकव्यसनेन तु दूरगतोपि मनसापि(1.12) कादम्बरीं मदिरां

1 Ms 'भ्रान्त्या 2 Add नस्य. 3 Ms. 'गुणसे', रुगम being lc. under l.5. 4 Ms 'र्दाशाम्न'. 5 Ms. 'त्र.

कादम्बरीं नाम स्त्रियं च न लब्धवान्. चन्द्रापीडेन राज्ञा कादम्बरी लब्धा अयं पुनश्चन्द्रापीं(1.13)डोपि भवन्कादम्बरीं न लब्धवानित्यर्थः ॥ 14.

सुप्तो हरिः क्वचन भूपतिना गुहां[यां]
— — ⏑ ⏑ ⏑ ⏑ ⏑ — ⏑ ⏑ —[3](1.14)र्बभूवे .
दंष्ट्रानखप्रकरकेसरचन्द्रिकाया-
मूष्माणमात्मन इवा ⏑ — — ⏑ — —(?) .

············[सु](1.15)प्तसिंहो धनुर्गुणटाङ्कारैराहूतः दंष्ट्रा च नखप्रकराश्च·················(1.16)················जहुवांबभूवे इति चिन्त्यम्··················(1.17) 15.

[Lines 18 to end of page missing](*)

[प्र]मार्ष्टुम् ॥

स्वतन्त्रैस्स्वेच्छाकल्पितैर्वचनैस्स्वैरात्मीयैस्तन्त्रवचनैः कर्तृभिर्दुष्टसत्त्वस्सिंहादिरल्पसत्त्वश्च(1.1) [कुपुरु]षो महतां साम्यं यदि यन्नीयेत . समर्थनायां लिङ्. तेन साम्यनयनेन हेतुना स दुष्टसत्त्वो महद्भ्यो(1.2)[मरणं] सहते . लभते इति वा पाठः. तथा हि माणवकत्वेन रूढमसमैस्साम्यमेव मलं निवारयितुं सिं(1.3)हं सोवधीत्. सिंहो माणवक इति लक्षणाया उदाहरणं प्रसिद्धम्. ततो राजैवमिवाचिन्तयत् अ(1.4)हमपि बाल्ये माणवक एवासम् अतो मम च सिंहेन साम्यं जातं तन्मम मलमतस्तन्मार्ष्टुमहं(1.5) [सिंहमेव हन्]मीति सिंहो राज्ञा हतः सिंहे हते सिंहसाम्यं न केचित्कथयन्तीत्यर्थः ॥ 16.

प्राप्नोति साधु(1.6)[रुपमानतया] स्थितोपि
प्राणप्रयाणसमयेप्युपकारकत्वम् .

1 Ms. °द्रापी°. 2 Ms. °ह°. 3 Is it भाजुहवांबभूवे ? 4 Ms. °शुष्मा°.
5 Restore–साम्ये स्वतन्त्रवचनैर्यदि दुष्टसत्त्वो नीयेत तेन मरणं सहते महद्भ्यः । सिंहं निजात्मनि स माणवकत्वरूढं रामावधादसमसाम्यमलं प्रमार्ष्टुम् ॥ 6 Ms. °शिर°.

श्रुत्वा कदाचन नृपेण हि गौरिवेति(17)
माप्तः पुरोपि गवयो घृणया न जघ्ने ॥

उपमीयते येन तदुपमानम् तद्भावेनापि स्थितस्साधुर्मे(18)रणावसरेप्युपकारं करोति तथा हि यथा गौस्तथा गवय इति पूर्वं श्रुत्वा पुरः प्राप्तोपि गवयो रा(19)ज्ञा न हतः कारुण्यात् ॥ 17.

पञ्चाननोद्भवभवं न ममाधुनास्ति
तत्पञ्चमं मुखमितीव भयाद्विधात्रा .(110)
दिङ्नागचक्रमपि पादतले विधातुं
पादाष्टकमकटनात्परिपूरितेच्छम् . 18.

भित्वा गते शरभमस्य(111) शरे सुदूरं
पुष्पाञ्जलिर्गगनतो भुवि यः पपात .
मन्ये स निर्वृतधिया दिवि राशिचक्र-
मध्यस्थिते(112)[न हरिणा?]⏑ ⏑ – – ⏑ – –[1]

············मद्दं पञ्चाननः पञ्चसंख्यमुखसिंसहश्च प्रागभवमद्य तु मम (113)··················पञ्चममुखस्य च्छेदात् अतः पञ्चाननत्वमनेन गोपितमिति भ(114)··················हन्तुमिच्छा पूरिता यस्य तं कुतः पादाष्टकनिर्माणात् तं शर(115)[भं]····· ······[आकाशा]द्यः पुष्पाञ्जलिः पपात स नूनं हरिणा···[रा]शि···वि(116) 19.

[Lines 17 to end of page missing][2](**18)

तैर्शून्यं स्वेच्छया गृहीतं वरं वारणानां चक्रवालं यत्र तत् स्वच्छन्दंचारिणशिखिनो मयूरा वहलयश्च(1.1) यत्र विहरन्तो मृगा यत्र राज्ञाभयदानादिति भावः ॥ 20.

1 Restore हरिणेन समर्प्यते स्म. 2 Copyist's remark at the top of the page—अस्यापि पत्रस्य स्थानं न सम्यक् निश्चेतु शक्यते । 3 Restore···शून्यम् । स्वेच्छागृहीतवरवारणचक्रवाल स्वच्छन्दचारिशिखि तद्विहरन्मृग च (?) ॥

आखेटिकाव्यसनिनो नृपतेर्विशेषा-
दायासि(1.2)ता इति गतैरतिमान्यभावम्.
अश्वैरवापि यवसावसरश्चिरेण
सर्पैस्त्वरण्यसुलभैः करभा ननन्दुः ॥

अश्वा(1.3) मया खेदिता इत्याखेटिकासक्तस्य राज्ञोऽत्यर्थं मान्यतां गतैरश्वैर्यवसेशनेयसरश्चिरेण प्राप्तः वनसु(1.4)लभैस्सर्पैर्हेतुभिरुष्ट्रा ननन्दुः. उष्ट्राणां सर्पाशनत्वात् ॥ 21.

नित्यानिमेषनयनत्वमयं विपाकं
दुष्कर्मणां(1.5) करभदर्शनतो विदित्वा.
पाणी पिधानपदवीमुपनीय काश्चि-
द्द्रष्टुं नरेन्द्रमपि नापुररण्यदेव्यः ॥

नित्यं(1.6) यदनिमेषात्वं तद्रूपं पापमुष्ट्रदर्शनान्मत्वा प्रथममस्माभिः करभो नूनं दृष्टो यतो निर्निमेषत्व(1.7)मक्ष्णां जातमन्यथाक्षि निमेषसुखं लभेत. उष्ट्रोदर्शनीय इति प्रसिद्धिः. अतो हस्तौ दृष्टेः पिधानत्वं(1.8) नीत्वा वनदेवता राजानमपि द्रष्टुं न प्रापुः ॥ 22.

वामेतरेण नयनेन च बाहुना च
कृत्वैकमत्यमिव नित्यमपि(1.9) स्फुरद्भ्याम्.
राजा निरुद्धनगरीगमनोद्यमोथ
प्रासादमुन्नतमकारयदप्यरण्ये ॥

सामत्यमिव कृ(1.10)त्वानवरतमेव कम्पमानाभ्यां दक्षिणाभ्यां बाहुनेत्राभ्यामिव निरुद्धो नगरीगमनोद्यमो यस्य स राजा वने प्रासादम(1.11)कारयत्. सुनिमित्तदर्शनात्तेन वने प्रासादः कृत इत्यर्थः ॥ 23.

1 Ms. °खरं. 2 Ms. °सुभैः. 3 Ms. °रव.

रामपादुका जटावन्धं वि(1.6)ना न शोभते इति ज्येष्ठस्य श्रीरामस्यानुवृत्ति-व्रती सन्नामसमीपाद्याति निवर्तते ॥ 59.

कुचतटम[नम्र](1.7)यादत्तदिव्याङ्गराग-
च्छुरितमभि दधानो मातुलुङ्गीफलच्छाम् .
अत्रिदुहितुरैन्द्रिस्संस्पृशन्नेष(1.8) काक-
स्समुपलभतेच्णोरेकशेषं स्वजात्या ॥

अनसूयादत्तेन दिव्याङ्गरागेण च्छुरितं स्तनम[ण्डलम](1.9)भि बी-जपूरफलभ्रांति दधानस्सन्नतस्संस्पृशंस्तक्षयन्नेष ऐन्द्रिः काकस्स्वजात्या काककुलेन सह(1.10) नेत्रयोरेकशेषमेकनेत्रत्वं लभते . सीतास्तनस्पर्शात्काकस्य श्रीराम इषीकास्त्रं दत्तवान् . रामवि(1.11)सृष्टेषीकास्त्रप्रभावात्समस्ता अपि काकाः काणास्संपन्ना इत्यर्थः ॥ 60.

रुद्धा विराधरुधिरेण धरेति(1.12) कामं
काकास्सहस्रनयनत्वमिमे चकाङ्क्षुः .
धाराधरस्य चरितेन दुरात्मनस्तु
नैसर्गिकं द्विनयन(1.13)त्वमपि व्यतीयुः ॥

रामेण हतस्य विराधनाम्नो रक्षसो रक्तेन भूर्व्याप्तेति लोभात्काकास्स्वात्मनोक्षिसह(1.14)स्रमभ्यलषन् . धराधरनाम्नः काकस्यापराधेन स्वाभाविकं द्विदृष्टित्वमपि ते तत्यजुः . सर्वे का(1.15)काः काणास्संपन्ना इत्यर्थः ॥ 61.

करेणाकूवाराचमनशुचिना मूर्धनि मुनि-
र्धृतेनायं रामे नि(1.16)जमिह महस्संक्रमयति .
अशङ्काद्दङ्कारावगमयदधो यः क्षितिभृतौ
कृतेच्छौ मेरोरप्युपरि भवि(1.17)तुं विन्ध्यनहुषौ ॥

योगस्त्यमुनिर्विन्ध्यनहुषौ क्षितिभृतौ पर्वतराजानौ अधो गमयन्नीचीकृ-

1 Text धाा°. 2 Ms. °नि. पृ°. 3 Ms. °दुषो.

तवान् (l 18) कीदृशौ मेरोरप्युपरि भवितु मेरुमपि जेतु कृतेच्छौ तथा महाहृकारौ अयमगस्त्य समुद्रा(l 19)चमनशुद्धेन शिरसि स्थापितेन हस्तेन दाशरथौ स्वतेजस्सन्नामयति प्रतिपादयति ॥(l 20) 62.

सुरतरुपश्वक्रमेषा मुनिप्पशरणेषु जयति पञ्चवटी .
शूर्पणखाच्छ्लललक्ष्मां लक्ष्मणयत्नोयमत्र(l 21)स्ते ॥

मुनिष्वशरणेष्वेषा पञ्चवटी कल्पवृक्षादीञ्जयति मुनीना रक्षणात्. शूं[र्पणखाया](l 22) अच्छल छलवर्ज लक्ष्माणि कर्णनासाच्छेदो यस्मात्स लक्ष्मण एव यत्नोत्रास्ते य (l 23*) 63

— — ⏑ — — ⏑ [श्रवणद्वयनासि?]कौघं-
पञ्चाहुतिप्रगुणित पुरतोनुजेन .
पत्नीसमक्षमिह पचवटी ⏑ — — (l 1)
[रक्षस्समिद्भिरजुहोद्द्विज]जाठराग्निम् ॥

अनुजेन लक्ष्मणेन पुरत पूर्व शूर्पणखाकर्णनासौ(l 2)छिनेर्व पञ्चाहुतिभि प्रगुणित द्विजाना क्रव्यात्पक्षिणा गृध्रादीना जठराग्निमुदराग्निं रामस्सीताग्रे(l 3) रक्षस्समिद्भि राक्षसैस्सह युद्धेरजुहोदतर्पयत् अग्निहोत्रे च पचाहुतयो भवन्ति समिद्भिरि(l 4)न्धैश्चाग्निस्तर्पितो भवति ॥ 64

त्रिशिरसि शर्वरीचरसहस्रचतुर्दशके
तदिह कबन्धवृत्तमुदपादि(l 5) चतुर्दशधा .
भयचकितेषु येन भुवनेषु चतुर्दशसु
त्रिपुररिपोर्व्यलम्भत दिनान्तमहानटता ॥

शर्वरीच(l 6)राणा सहस्रचतुर्दशके विगतशिरसि सति चतुर्दशप्रकारं

---

1 Ms नयात lc under l 21  2 Ms ण्पर्ण°  3 Ms °न्मा lc under l 20
4 Ms धं°  5 Ms °काद्द°  6 Ms शार्ण°  7 Ms द°, blank after तो

नृत्तमुत्पन्नं येन भुवनेपुं(l.7) भयसम्भ्रान्तेपु सत्सु हरस्य नृत्तविलम्बो जातः. हरस्यापि नृत्तं दृष्ट्वाश्चर्यमुत्पन्नमित्यर्थः ॥ 65.

देशस्सोयं(l.8) शवररमणीगीतकाकुत्स्थकीर्त्ति-
श्रुत्युत्कण्ठावहितनिहतप्राणिसुप्रापनाकः.
मायात्मापि व्यधित(l.9) नयनस्पर्धया वर्धमान-
क्रोधः प्राणैरपि स हरिणो यत्र सीतापकारम् ॥

शवररमणीभिर्गीतायाः(l.10) काकुत्स्थकीर्त्तेश्श्रुत्याकर्णने उत्कण्ठितावहितास्सावधाना अत एव निहता ये प्राणिनो मृगास्तैस्सुप्रा(l.11)पस्सुलभो नाको यत्र सः. नारायणं हि स्मरतां मरणप्राप्त्या स्वर्गप्राप्तिः. एवंविधस्सोयं देशः ने(l.12)त्रस्पर्धयेवातिक्रुद्धो हरिणरूपो मारीचः प्राणैरपि[4] सीतापकारमकरोत् ॥ 66.

रूपं न मन्त्रमहसामपि तत्प्रकारयं(l.13)
[दूरं मनो] नयति यज्जनकात्मजायाः.
इत्थं विदन्निव विशन्नुटजं पुरोगं
वैरूप्यमेव विदधे दशकण्ठ(l.14)भिक्षुः ॥

यद्रूपं रामात्सीतायाश्चित्तं दूरीकुरुते तद्रूपं मन्त्रमहसां देवानामपि न प्रकाश्यम् (l.15) देवानामपि तद्रूपमसंभाव्यमित्यर्थः एवं जानन्निव रावणभिक्षुः पर्णशालां विशन्नेव पूर्वमेव वि(l.16)रूपतामकरोत् ॥ 67.

प्राणान्स्वयौवनजवातिजवान्विसृज्य
स्वर्गस्थितं दशरथं प्रति बालमित्रम्.(l.17)
उत्कृत्तपत्त्रतिरिहाद्य निशाचरेण
नोद्ग्रीवतां भजति मानधनो जटायुः ॥

---

1 Ms. Blank after °पु. 2 Ms. °ण्ठावि°. 3 Ms. °स्य° °ते°. 4 Ms lc. under l. 13. 5 Ms. °न्तिन. 6 Ms °प्रात. 7 Ms. °त्पप°. 8 Ms °पसु° (!)

वालमित्रं स्वर्गस्थं दशार(। 18)थं[1] प्राणान्स्वयौवनजववदतिजवांस्तूर्णगामिनः प्रतिमुच्य जटायुर्दशास्येन लूनपक्षो नोद्भ्री(। 19)वतां भजति शिरो नोन्नमयति मानधनो जटायू रावणेन हत इत्यर्थः. मानी चावमानितस्सन्शिरो(। 20) [नोन्नमय]ति ॥ 68.

नीत्वा पावकतां जटायुवपुषा सर्वाशिनं पावकं
देवोयं पितृमित्रघातिनम(। 21)[रिं वुध्वाचि[2]]राद्रावणम्.
सुग्रीवस्य चकार दुन्दुभिवपुःकङ्कालवैकर्तनि-
क्रीडापर्वतमारुतास्त्र(। 22)⏑ ⏑ ——— ⏑पूतं शिरः ॥

सर्वाशित्वादपवित्रमग्निं जटायुदेहहोमात्पवित्रीकृत्य पितृमित्रं(। 23**7b) जटायुं हतवन्तं रावणमरिं वुध्वा रामस्सुग्रीवस्य शिरः पूतमकरो[त्·········कङ्का](। 1)लः कलेवरमेव वैकर्तनिक्रीडापर्वतो यमलीलाद्रिस्तस्य मारुता[स्त्र···········](। 2)हिकं कृत्वा सुग्रीव स्वपक्षीकृतवानित्यर्थः ॥ 69.

कक्षाकुक्षिगतस्य [हहयधनुर्ज्यावन्धपीडाजडा-
न्स](। 3)व्रीडो दशकंधरस्य निविडं नापीडयद्यो भुजान्.
तस्मिन्वालिनि सप्तलोकविजयस्तम्भायमानान्पु(। 4)र-
स्तालान्सप्त विदार्य दारुणजवो रामेषुरेप च्युतः ॥

हैहंयस्य कार्तवीर्यस्य धनुर्ज्यावन्धपीडा त(। 5)या जडान्रावणस्य वाहुमूलगतस्य भुंजान्यो दृढं नापीडयत्तस्मिन्वालिवानरेयं वाणो दुस्सहज(। 6)वस्सन्सप्तभुवनजयस्तम्भसमान्सप्त तालान्भित्वा पतितः. हैहंयावष्टब्धस्य रावणस्य संवन्धनेन(। 7) किं फलमिति सव्रीडत्वम् ॥ 70.

शैलेषुप्विन्दशमुखभुजस्तम्भसंस्तम्भनार्हे
दृष्टे पुत्रे भुवि निप(। 8)तिते नाक्रमेणोद्गते च.

---

1 Add प्रति 2 Ms has ए ए. वि. on margin. 3 Ms. 'द्याकद'. 4 Ms. दे'. 5 Ms भुजा'.

वाष्पैरशोकप्रमदरसयोर्यौगपद्यप्रवृत्तै-
स्साहस्राक्षैरिव घनजलै(19)र्विव्यथे रामभद्रः ॥

अस्मिन्पर्वते मेघाम्भोभिः रामो व्यथित.. अत्रोत्प्रेक्ष्यते साहस्राक्षै-रिन्द्रसंब(10)न्धिभिर्वाष्पैरिव. कीदृशैरशोकानन्दयोस्सहावस्थानेन प्रवृत्तैः.. हर्षशोकयौगपद्यहेतुमाह पुत्रे वा(11)लिनि हते स्वर्गे च प्राप्ते दृष्टे सति. पुनस्य वधाच्छोक. स्वर्गप्राप्त्या हर्षः रावणभुजस्तंभनयोग्ये. साह(12)-स्राक्षैरिति साभिप्रायम्. सीताविरहाद्रामोजाद्रौ रुरोदेत्यर्थ. ॥ 71.

श्रुत्वा भ्रातुरमर्त्यलोकगमनं(13) तत्कालसंपातिना
वाष्पौघेण निदर्शितार्णवपथस्संपातिना मारुतिः.
लङ्कामेत्य तथा व्यचे(14)ष्टत यथा स्वस्मै च पित्रे पितु-
र्मित्राय स्पृहयालुतां च मरुते निन्ये पडाशां[प]तीन् ॥

भ्रातु (15) जटायोस्स्वर्गगमनं श्रुत्वा तत्काल पतता वाष्पप्रवाहेणैव हेतुना कर्तृभूतेन सम्पातिना पक्षिणा(16) निदर्शितसमुद्रमार्गस्सन्मारुति-र्हनुमांल्लङ्का प्राप्य व्यचेष्टत तथा शक्तिमदर्शययथा स्वस्मै(17) पित्रे पव-नाय पितुर्मित्रायाग्नये च षट्लोकपालान्स्पृहयालुतां श्रद्धालुत्वमनयत्. यत्पुत्रो लङ्का(18)दाहकस्स वायुर्धन्यो यन्मित्रपुत्रोयं हनुमान्स चाग्निर्धन्य इति लोकपाला. स्तुतिं चक्रुरित्यर्थ. ॥(19) 72.

दत्वा देव्यै रामभद्राङ्गुलीयं
तद्दत्तं च प्रत्यभिज्ञानरत्नम्.
लङ्कादाहं स्वैर्मयूखैर्नुवाणं
पा(20)णौ पत्युस्सत्यसन्धो निधत्ते ॥

अभिज्ञानं रामाङ्गुलीयं सीतायै दत्वा स्वरश्मिभिर्लङ्कादा[हं क]थ-

1 Ms. 'पे' रि'. 2 Ms 'भवि 3 Ms 'अपि' 4 Ms 'न' lc. under l 11
5 Ms. ष' 6 Ms 'प्पो'. 7 Ms 'स्र'. 8 Ms 'दाष'. 9 Ms 'उर'. 10 Ms दिन्दे

(1.21)यन्तमिव सीतासंबन्धिनं प्रत्यभिज्ञानमणिं सत्यसन्धो हनूमान्रामस्य हस्ते न्यस्यंति ॥ 73.

———(1.22)गमसंस्कारकुमारब्रह्मचारिणः .
अमी कपिशिताकाशाः पिबंत्याशाः प्लवङ्गमाः ॥

·········(1.23*)जा ब्रह्मचारिणः निस्संख्या इत्यर्थः कपिशितमाकाशं यैस्ते वान(1.1)[राः]········· ॥ 74.

——[रत्ना]करत्वं निविडयति तटाघातसातत्यहेला-
खेलन्मातङ्गनक्राहत(1.2)[गिरिशकलारब्धमाणिक्यवर्पः].
[अ]म्भोधेर्देवसेतुर्जलधरकरणिं गृह्णतो यस्य पार्श्वे
विद्युज्ज्वालायमा(1.3)नैर्ज्वलितमिदमितश्चामुतश्च प्लवङ्गैः ॥

तटाघातेपु सातत्येन नित्यं हेलया निखिलाभिं(?)र्मातङ्गन(1.4)क्रैराहृता ये गिरिशकलास्तैरारब्धं माणिक्यवर्पं यस्य स देवसेतुर्जलनिधे रत्नाकरत्वं करोति . से(1.5)तुशैलरत्नैरेव रत्नाकरस्समुद्रो जात इत्यर्थः यस्य मेघसाम्यं दधतो निकटे इतश्चामुतश्च विद्युत्स(1.6)मैर्वानरैरिदं ज्वलितम् ॥ 75.

एतान्पश्य निशाचरेन्द्रनगरीचामीकराट्टालक-
च्युत्युत्कर्पदुरीच्यदुस्स(1.7)हसहोवैश्वानरान्वानरान् .
एषामेव शिरोभिरेभिरभितो रुद्धान्तरः प्रत्युत
प्राकारः कपिशीर्पपं(1.8)क्तिरचनारिक्तोयमाभासते ॥

लङ्काप्राकारहेमाट्टालकदीप्तिभिरुत्कर्षेणाधिकं दुरीक्ष्यो दुस्स(1.9)हस्तेजोभिर्येषां तान्सहसा वैश्वानरानिति वारोपः . एषां वानराणामेव शिरोभिर्निरुद्धमध्यो(1.10)यं प्राकारः कपिशीर्षपंक्तिसंज्ञया रचनयातिरिक्त आभासते .

---

1 Ms न्यस्त°. 2 Ms. 'निरृ°. Is it सार्विरृ° ? 3 Ms. 'मानग°. 4 Sic. Read °मा रोरद्भिर्मा°. 5 Ms. 'गिरे°.

ध्यामुखे प्रतिभासते　हेमवप्रे कपि(111)शीर्षपङ्क्तिरपि बाहुल्यात्र विभाव्यते इत्यर्थ ॥　76

व्यतिकरितहरितपिशङ्गरक्तःकपिनलयोधकबन्धताण्डवेयम् .
असुलभसुरसुन्दरीविमाना रघुपतिरावणसपरायगोष्ठी ॥

हरिता का(113)लाना रक्षसा पिशङ्गाना कपीना च कबन्धताण्डव व्यतिकरित मिलित यस्या सा तथा दु(114)र्लभाप्सरोविमाना बहूना वीराणा मारणादिति भाव　रामरावणगोष्ठीय भवति ॥　77

राममेव(115) किल शेषशायिनं शेषमेव च विचिन्त्य लक्ष्मणम् .
गाढता ध्रुवमिद न शिश्रिये मेघनादभुज(116)गास्त्रबन्धनम् ॥

राम विष्णु शेषे शयान लक्ष्मण शेषमेव चिन्तयित्वा मेघनादकृत सर्पास्त्रबध(117)न गाढता नाश्रयत्. यद्दीन्द्रेणाराध्यस्याहिपतेश्च कथ वय बन्धन कुर्म इति चिन्तयित्वेव सर्पास्त्र(118)बन्धन सद्यो विगतम् इत्यर्थ ॥78

ज्येष्ठानुवर्तनरसे कथमेतदीये
भाव्य मयेति तमिवाखिलभुज्जि(119)द्विषः .
शक्तिं न्यधाद्दशमुखो हृदि लक्ष्मणस्य
वेगादथ पवनभूः प्रतिहन्ति ता च ॥

एतदीये ल(120)क्ष्मणसबन्धिनि ज्येष्ठानुवर्तनरसे रामभक्तिरसे सति मया कथ भाव्य जीवनीयमित्यतस्त रामभक्ति(121)[रसमु]द्धर्तुकाम इव रावणो लक्ष्मणहृदये शक्ति न्यधात्ततो हनूमास्ता शक्ति प्रति शल्योद्धरणा-(122)　॥　79

[ध्यर्थोद्धृ]तगगिरिपीडितदोर्गलस्य
द्रोणाचले करगतेपि विलम्बिताङ्घ्रि .

1 Ms क्षवेग　2 ... 3 Ms ... 4 Ms ...

लंकापतेः कपिर(1.23)[यं हृदयं वभ]ञ्ज
पुत्रं पुनर्दशरथस्य सुतस्तृतीयः ॥

अर्धमुद्धृतेनेशगिरिणा कैलासेन पी(1.24**77¹)डितभुजवलस्य रावणस्य हृदयं हनुमान्द्रोणाद्रौ हस्तगेपि·········(1.1)पुत्रमिन्द्रजितं लक्ष्मणो भञ्जावधीत् रावणः कैलासं किंचिद्धु······(1.2)हस्ते धारयित्वा समुद्रं तीर्ण इत्यनयोर्महदन्तरमित्यर्थः ॥ 80.

अ‿‿‿‿‿‿‿‿‿‿‿‿[धूं](1.3)मे
घ्राते चितादहनजन्मनि कुम्भकर्णः.
सुग्रीवनिष्फलविकर्तितकर्णनास-
——‿–[श्रयति विश्र](1.4)वसोभिधानम् ॥

इन्द्रजितं हतं श्रुत्वास्येन्द्रजिताश्रिताधूमे घ्राते सुग्रीवेण निष्फलं कृत्तकर्ण[नासो](1.5)पि एष कुम्भकर्णो विश्रवसः पितुर्नामाद्य धत्ते. अयमर्थः आदावेव यदि कुम्भकर्णस्य क[र्णौ नासां](1.6) च सुग्रीवोच्छेत्स्यत्तदा छेदः सफलोभविष्यत् कर्णयोरभावे सतीन्द्रजिन्मरणस्याश्रवणान्न[ासाया](1.7)अभावे धूमस्य घ्राणाभावात्. स्वपितृनामधारणं कर्णरहितत्वादिति भावः॥81.

रामशरकु[म्भ](1.8)सम्भवसंरम्भात्कुम्भकर्णविन्ध्यगिरिः.
शशितरणिसरणिरोधी न्यपतदसावपुनरुत्पतनः ॥

राम(1.9)शर एवागस्त्यस्तस्य संरम्भेण कुम्भकर्ण एव विन्ध्याद्रिश्चन्द्रार्कमार्गरोधी सन्नपुनरुत्थानः पतितः ॥ 82.

श(1.10)तकोटिकोटिशतमिव
हृतमिव जितस्य वज्रिणः.

1 Ms. has १. रा. प. on margin. 2 Ms. 'अव'. 3 Is it श्रुत्वेन्द्रजिद्धननस्य सधा च धू'? 4 Ms. 'लक'. 'विकर्तित' added to suit metre and sense. 5 Ms. 'वर्णो'. 6 Ms. 'धान्. 7 Ms. 'सभि'. 8. Ms. 'गस्त'. 9 Ms. 'मिप. 10 Ms. 'त' lc. under 1. 11.

दर्शयति करगतं समरे
निशिताग्रपाणिज(l.11)मिपाद्दशाननः ॥

जितस्येन्द्रस्य.हृतमिव वज्रधाराशतं रावणो[1] नखव्याजाद्धस्तगतं दर्शयति ॥(l.12), 83.

हिमकिरणकिरीटकुट्टिन-
स्ववदनवेदनया स्मृतिस्पृशा.
झटिति विघटितान्पितामह(l.13)-
स्समघटयत्प्रपितामहोस्य यान् ॥

हरेण लूनं यत्स्वमुखं तस्य व्यथया स्मर्यमाणयेव हेतु(l.14)भूतया अस्य प्रपितामहो ब्रह्मा यान्विघटितान्सततस्तूर्णं समघटयदयोजयत् ॥ 84.

तत्तादृग्रघु(l.15)वीरकैतवशिरस्स्वच्छन्दसन्दर्शन-
क्रीडापञ्चमपातकप्रणयितामप्रोयमायातवान्.
[तैः कृत्तैः] पुर(l.16)तो विदेहदुहितुस्संदर्शितैर्मूर्धभिः
प्रायश्चित्तमिदं चकार दशधा तात्कालिकं रावणः ॥

तै(l.17)र्दशभिश्शिरोभिः कृत्तैस्सीताया दर्शितै रावणो दशप्रकारं प्रायश्चित्तं सद्योकरोत्.-प्रायश्चित्ते हेतु(l.18)माह स रामो तादृक्वासौ रघुवीरस्य रामस्य कैतवेन मायया शिरसि स्वच्छन्दस्यान्छन्नं भेदस्तस्य(l.19) संदर्शनमेव क्रीडा सैव पंचमं पातकं तत्र प्रणयितां कर्तृत्वं प्राप्तवान्. अन्यत्र पातकी प्रायश्चित्तं करोति ॥.(l.20) 85.

कृत्तेषु मूर्धसु नवस्वपि रावणस्य
यावल्लुलाव दशमं वदनं न रामः.

---

1 Ms. 'वन'.　2 Ms. 'दरि'.　3 Ms. '-न्या'.　4 Ms. प्रचोदित'.
5 Sic.　6 Ms. 'दश'.　7 Sic. In it 'न्दन' न' ?.　8 Ms. कृ'.

श्रीस्तान्न तावदमुचद्दलि(121)ते तु तस्मि-
स्तुल्यं व्यभज्यत मुखेषु दिशा पतीनाम् ॥

नवसङ्ख्येषु रावणस्य शि (122)सत्सु यावन्न रामो दशम शिर-
श्छिन्नवास्तावन्छ्रीशिरांसि नात्यजत तस्मिन्द (123*)
विभागेन गता अयमर्थ प्राग्वत्पुनस्सधानशक्तित्वान्नवसङ्ख्य(1 1) -
श्वस्ता ॥ 86.

पत्युर्देवरपुत्रयोश्च वदनैः कल्पान्तभानुप्रभे-
र्लङ्कातोरणमा(12)[लिना विरचिता दृष्टापि ता वानरैः?]
स्वःस्त्रैणैरपि सींचिताश्रुनयनैः कारागृहान्निर्गतैः •
प्राणैर्वज्रमये(13)रिय तदपि नो मन्दोदरी मुच्यते ॥

रावणस्य तथा देवरपुत्रयोश्च मुखैर्वानररचिता लङ्काया तो(14)रण-
माला मन्दोदरी यद्यप्यपश्यत्तथापि सा बन्धननिर्गतैश्शोकाश्रुपूर्णदृष्टिभिस्स्वर्ग-
बन्दीवृ(15)-दैर्वीक्षितापि वज्रकठिनै प्राणैर्न वियुज्यते[4] अयमर्थ बन्धुसहि
तस्य भर्तुर्मरण पश्यन्त्या अपि(16) मन्दोदर्या प्राणा न निर्यान्ति ॥ 87.

इयमपि रघुराजपुत्रपत्नी
कनकमयत्वमिवागता पुरैव
सम(17)धिकसमवेतकान्तिरूपा
प्रमुषितमन्युमला निरैति वह्नेः ॥

इयमपि सीताग्निमध्यान्निरे(18)ति अत एव पुरैव परित्यागात्पूर्वमेव
सुवर्णमयत्वमिव प्राप्ता सीता त्यक्त्वा हि रामो हेममय्या(19) सीतयैव प
त्न्या सह यज्ञानकरोत् अधिक जातकान्ति तथा प्रमुषितो निवारित
मन्युमलोपयशो य(110)या ॥ 88

1 Ms दलिते 2 Ms नां 3 Ms मद्य 4 Ms मुच्यत
5 Ms पद्यन्त्या 6 Ms एव

लङ्कादाहप्रसङ्गप्रथमपरिचितेनामुना स्वामिभक्ति-
स्वस्सिन्धुस्नातकेन द्रुतमनिलभुवा(1 11) वन्दिताभ्यां पुरैव .
पद्भ्यां लङ्केन्द्रचूडामणिगुणितनखश्रेणिमाप्यं(?)त्रपाभ्यां
मातुर्निर्माय पापघ्न(1 12)यमथ विदधे पुष्पकस्यात्र देवी ॥

युद्धात्पूर्वमेव लङ्कादाहप्रसंगपूर्वपरिचितेन रामभक्तिगङ्गायां स्नातकेन ह(1.13)नुमतैव प्रथमं वन्दिताभ्यां ततो विभीषणस्य मुकुटरत्नैः प्राप्तां नखसंपर्केण त्रपा ययोस्ताभ्यां . नखानां(1 14) रत्नाधिकद्युतित्वादिति भावः विभीषणेन प्रणताभ्यामित्यर्थः . पादाभ्या सीता पापद्वयं भूमे.(1 15) कृत्वा पुष्पकस्य पापद्वयमकरोत् . अयमर्थः रावणस्पर्शदोषाद्वयोर्यत्पापमासीत्तत्सीतापा(1 16)दस्पर्शेन शान्तम् ॥ 89.

आरूढे प्रसभापहारनिबिडव्रीडाजडं राक्षसे
मन्दं मन्दमुवाह वा(1 17)हनमिदं दिव्यं धनस्वामिनः .
देवेनेदमधिष्ठितं तु गुरुतायोगेपि तल्लाघवं
धत्ते येन बिभे(1 18)ति सोप्यचतुरंमन्यः खगानां पतिः ॥

रावणेन हठापहरणलज्जयेव जडं पुष्पकं रावणे(1 19) आरूढे सति मन्दं मन्दमवहत्तत्पुष्पकं रामेणाधिष्ठितं सद्गौरवे सत्यपि तल्लाघवं धारय(1 20)ति येन लाघवेन हेतुना गरु[डो] मन्दमात्मानं मन्यमानो भयं प्राप्नोति . अयमर्थः मन्दगामि(1 21)[नं मा] त्यक्त्वा नारायणः पुष्पकमेवारोहयतीति गरुडभयं . गौरवेपि लाघवमिति विरो(1 22)[धः] ॥ 90.

[सु]ग्रीवश्च विभीषणश्च कृतिना रामेण निष्कण्टकी-
कृत्याप्यर्पितया तथा न भजतो रा(1 23)[ज्यश्रिया] निर्वृतिम् .
लङ्काश्लेषणशीतलीकृतमनस्स्वामिभियादृत्तया
दृष्ट्या भाग्यरता(1 24..78)मर्वति हनुमानात्मानमाद्यं यथा ॥

---

1 Ms. 'नव'. 2 Sic Comm suggests 'श्रेणिमाप्त' which would be bad metre. 3 Ms. lc. under l. 12. 4 Ms. घ्ने. 5 Ms. भाव'. 6 Ms. नख'. 7 Sic. Is it 'द्गौर'? 8 Ms. has ९. ८. on margin.

सुग्रीवविभीषणौ रामे·········[य](l.1)था लङ्कादाहसुखितसीतादत्तया दृष्टया हनुमान्महाभाग्यवन्तमा···············(l.2)सीतादृष्टिरित्यर्थः ॥ 91.

मृडतनुरनुप्राणद्विश्वा भुजङ्गमजङ्ग[मा-
भरणभरणी शम्भोः(?) प्रिय](l.3)ङ्करणी दृशः .
अजनयदमुं कौमारेण क्रमेण ततोंकरो-
त्सुरहितकृत[ो विष्णोस्साहायकं कपिकेसरी?](l.4) .

अनुप्राणज्जीवज्जगद्विश्वं यया सा मृडस्य तनुरीश्वरमूर्तिर्वायुरूपा हरस्य भुजङ्गमा एव जङ्ग(l.5)मान्याभरणानि तेषां भरणी पोषिका हरस्य ललाटदृष्टयग्नेः प्रियंकरणी ज्वालाकरी हनुमन्तम(l.6)जनयत् अयं हनुमान्कौमारेण क्रमेण रामस्य विष्णोस्साहायकमकरोत् केसरी राजा ह···
···(l.7)न्कुमारः स्कन्दश्च दैत्यदलनाद्विष्णोरुपकारं कृतवान् . अयममुमित्यनयोर्मध्यादेकस्य पाठे······(l.8)रस्यार्थलभ्यत्वम् ॥ 92.

वैदेहीकिंवदन्त्या रघुपतिहृदयं लक्ष्मणस्याथ वक्ष-
स्संजीवन्या विशल्यं(l.9) विरचयितुमयं द्विः पयोराशिपारे.
यातायातं विधाताप्यधिवसति यतो विस्मयस्यानिभूमिं(l.10)
भूमौं(?)रंहो निरंहो वहति हनुमतस्संमतं तद्विमानम् ॥

सीतावृत्तान्तेन राम·········(l.11)जीवनौषध्या लक्ष्मणस्य च वक्षो विगतशल्यं कर्तुं द्वौ वारौ समुद्रस्य पारे गता[गतं]······[ह](l.12)नुमान्येनाश्चर्यस्यातिशयं प्राप्तः तद्धनुमतो मनोहरं निरंहो निष्पापं रंहो·········
(l.13) धारयति ॥ 93.

लङ्कायामपि चन्द्रशेखरधनुर्मौर्वीकिणश्यामिकां
क्रान्तां दाशरथे[र्भुजादिव मनो](l.14)राज्योपधानीकृतात् .

---

1 Ms. ततोक°. 2 Ms. lc. mark *before* °क° *but nothing is written on* margin. 3 Ms. °जीवि°. 4 Ms. °जव°. 5 Ms. °रय°.

न्यस्तां पत्रलतां दधत्त्रिजटया काकुत्स्थकान्तामुखं.
पुष्यत्पुष्पक ⌣ – [भ्रकुह](1.15)रे श्वेतांशुतां शंसति ॥

काकुत्स्थस्य कान्तायास्सीताया मुखं कर्तृ श्वेतांशोश्चन्द्रस्य भावं शंस-[ति](1.16) पुष्पकमेवाभ्रकुहरं तस्मिन्पुष्यद्विकासितम् तथा लङ्कायामपि त्रि-जटयां राक्षस्या······(1.17)लितां पत्ररचनां दधत् अत्र संभाव्यते सीताया मनोराज्येपूपधानीकृताद्रामभुजादी(1.18)श्वरधनुर्गुणश्यामिकां संक्रान्ताम्. नेयं पत्रलता किं तर्हि मौर्वीकिणा इवेत्यर्थः ॥ 94.

एतस्मिन्द(1.19)ष्टमात्रे रघुतिलकयशोहंसवीतंसकल्पे
द्वैगुण्यं दृक्सहस्रं व्रजति सुरपतेर्निर्भरत्वान्मु(1.20)देति ,
पौलस्त्यस्य प्रपित्सोस्समरमरणतो देवभूयं शरौघै-
र्द्वैधाक्लृप्ताक्षिमार्गं नयति दिवम(1.21)यं मातलिर्वर्म दिव्यम् ॥

रामयश एव हंसस्तस्य वीतंसकल्पे भूषणसदृशे(1.22) तस्मिन्नवलोक्यमानेन मुदा हर्षेणेन्द्रस्य दृष्टिसहस्रं द्वैगुण्यविकासं·········(1.23*) ······तस्य रावणस्य बाणवर्षैर्द्वेधा द्विसहस्रसंख्यः क्षिप्तोक्षिमार्गो(1.1) ········· ॥ 95.

तेजोवधं रचयितुं रजनीचराणां
रामाय यत्करसहस्रमिव स्वमर्कः .(1.2)
स्नेह ⌣ – ⌣ ⌣ ⌣ – ⌣ ⌣ – नतश्च
विभ्रद्रथो हरिसहस्रमनेन निन्ये ॥

रक्षसां तेजोहानिं कर्तुं सूर्यस्स्वं(1.3)रश्मिसहस्रं रामाय यद्विसृष्टवांस्तद्वाजिसहस्रं धारयन्रथो मातलिना नीतः ॥ 96.

1 Ms. 'ट्रुत्य'. 2 Ms. 'व्य. 3 Is it निचित्रा'? 4 Ms. 'रोदे'. 5 Ms. कयस', 'भूषण' crossed out. 6 Ms. दृशे ह्रयदः crossed after 'दे. 7 Ms. ringed with a line. 8 Ms. 'स्तर'. 9 Ms. 'रक्ष.—'मानिर्व struck out after 'क्ष.

अ(I.4)यं नंदिग्रामस्सुकृतफलभूमिर्नयनयो-
र्जटाभारं यस्मिन्सममवनिभारेण भरतम् .
क्षिपंतं दृष्ट्वा(I.5)ग्रजचरणयोरानतमुखौ
समं जातावेतौ रजनिचरशाखामृगपती ॥

यत्र भूभारेण सह जटा(I.6)[भारं रामपा]दयोरुपरि निपन्तं भरतं . राज्यं प्रत्यर्पयन्तमित्यर्थः . दृष्ट्वैव सुग्रीवविभीषणौ ए(I.7)तावधोमुखौ संपन्नौ . ताभ्यामग्रजयो रावणवालिनो राज्यहरणाल्लज्जेति[1] भावः . नेत्रयोः पुण्यफ(I.8)लस्सोयं नंदिग्रामः ॥ 97.

अयोध्येयं ध्येयं कथमपि विरिञ्चप्रभृतिभि-
र्जनास्सर्वे यस्यां त(I.9)[मपि नयना]तिथ्यमनयन् .
न यं दृष्ट्वा पारं न भवजलधेर्याति पशवो
यतस्तं सेवित्वा कपिभि(I.10)[रपि तीर्णो] जलनिधिः ॥

यं दृष्ट्वा पशवोपि संसाराब्धिपारं लभन्ते तं विष्णुमपि ध्यातव्यं सर्वे ज(I.11)······तिथ्यमनयन्नपश्यन्नित्यर्थः सेयं अयोध्या भवति पशुप्राणानां हरिदर्श(I.12)········ वानरैरपि समुद्रस्तीर्णः ॥ 98.

निरशेषानुदधीन्नदीश्च निखिलास्तीर्था(I.13)[नि सर्वाणि च?]
भ्रान्त्वा वारिभिराहृतैर्जनकजाचारित्रमित्रैरमी .
विद्युत्वन्त इवाम्बुदाः कपिचमूमिश्रा(I.14)[स्त्रिया]माचरा-
श्चक्रुः कारणमानुपस्य जलधिक्रीडानिवासस्मृतिम् ॥

विद्युत्सहिता मेघा इ(I.15)व वानरसहिता राक्षसा हेतुमानुपस्य रामरूपस्य विष्णोस्समुद्रलीलागृहस्मरणं चक्रुः स(I.16)मुद्रादीन्गत्वानीतैर्जलैः अयमर्थः राज्याभिषेकार्थं तावन्तः कलशाः क्षिप्ता यावद्भिस्तस्य स(I.17)-*मुद्रस्मरणं जातम् ॥* 99.

1 Ms °जेति  2 Ms. °तिमप्यनयन्  3 Ms. °आनैये°.  4 Ms. हेतुमाद crossed before वा°.  5 Ms. °त्रिदा°.  6 Ms. तारक°.

आ देवाद्दिवसेश्वराद्दशरथं यावत्सदेश्ये कुले
सर्वस्मिन्ननरण्यमन्युश(l 18)मने प्रस्ताविते नाट्ये
स्वत्र स्वत्र महर्षिरेष भरतः पात्रक्रमे मेनका-
मुख्यानाममरावतीमृग(l 19)दृशा शिक्षागुरुर्लक्ष्यते ॥

सूर्यात्प्रभृति दशरथ यावत्समानदेशे कुले आकाशस्थिते इत्यर्थ (l 20) अनरण्यहन्तुर्दशासनस्य वधादनरण्यमन्युशमननाम्नि नाटके आरब्धे सति *मेनकादीनामप्सर(l 21)[सा स्व]स्मिन्स्वस्मिन्पात्रक्रमे भूमिकारम्भे शिक्षा-* गुरुरेषं लक्ष्यते ॥ 100.

सेयं देव तिलोत्तमा स्व(l 22)⌣⌣——चमायातयचा(?)-
वेतावायतनारविन्दमुकुलौ लावण्यरूपश्रियोः ।
अस्थानाभि(l 23**79)निवेशतां न दधतुः सुन्दोपसुन्दौ⌣—
स्पृष्टौ तद्यशसोरनाम⌣⌣———⌣———॥

··(l 1)न्दयोस्सन्निधिनोर्यशसो राम णार्थं प्रकटावमृतघटा-
·· · · · (l 2)त्त. स्तनयोस्सौन्दर्यात्सुन्दोपसुन्दयोस्तिलोत्तमायामनु-
रागो नास्था[नि] (l 3)धिका तिलोत्तमा ॥ 101.

अस्याः पश्य विदेहराजतनयानेपथ्यलीलायित-
स्व——⌣⌣⌣——⌣⌣——(l 4)द्धांदं रघुस्वामिनः ।
एतस्यां निभृते दृशौ विनिहिते स्मृत्वोज्झितानीतया
देव्या सेर्ष्यतया यथैषं न [पुनः](l 5) स्पृष्टो विशन्त्या भुवम् ॥

तिलोत्तमायारसीतारूपाभिनयो रामस्य चित्त तथा रञ्जयति यथेर्ष्या-
वशा(l 6)दिव भूमि प्रविशन्त्या रामेण न्यस्ता दृष्टि स्मृत्वा त्यक्तानीत-
यापि सीतया राम पुनर्न स्पृष्ट ॥ 102.

---

1 Ms 'स्वे' 2 Ms 'म उ' le under l 20 3 Suil मान.
4 Is it 'का स्वरो' ? 5 Ms has ? स ? on margin 6 Ms 'रंग'.
7 Ms 'नेव'. 8 Is it 'न स्व ने ऐव तदा पूर्व सनर्द? स्यु?' ? 9 Ms देव.

आव(17)जितो जनकराजसुताभिनीत्या
नून तथायमनयाप्सरसात्र देवः
वाञ्छन्त्यरोचकितया(7) वरमेतमेव
ज(18)न्मान्तरेष्वपि यथा स्ववश विधाता ॥

सीतारूपाभिनयेन तिलोत्तमया रामस्तथा वशीकृतो यथा(19)रोचकितयान्यस्मिन्नभिलापाभावात्सा जन्मान्तरेष्वपि तमेव भर्तार वाञ्छन्ती तमेव स्ववश नय (110)पि स्ववशं करिष्यति इत्यर्थ ॥ 103

स्वरचितमिति प्राज्य चित्तस्थित पृथिवीभटे
भणति पृथिवीरा[जो जातो](111) मुहुर्मुहुरुन्मनाः .
नयनविषय याता चित्राकृतिस्तु तिलोत्तमा
तमपि विदधे चित्रन्यस्त ⏑—⏑(112)विलोकिताम् ॥

पूर्वजन्मचरित्र पृथिवीभटे वर्णयति सति राजोत्कण्ठितो जात चित्रे स्थित[ दृष्टा](113)तिलोत्तमा राजानमपि चित्रस्थितमिव चक्रे अतस्सभाव्यते एकत्वमिव राजान नेतु(114)मिच्छु अत्यनुरागाद्धि द्वयोरेकत्व भवति ॥ 104.

चक्रे राज्याश्रमपदमुनेस्सनिधानेस्य सत्वै
वरत्यागस्त्वय(115)मिति दिशः किवदन्त्या भ्रमन्त्या .
यस्मिञ्जन्मप्रभृति भगवान्सन्निधत्ते [स्मरारि]
स्स्थातु वाञ्छामकृत हृद(116)ये तत्र तस्य स्मरोपि ॥

राज्यमेवाश्रमपद तत्र मुने राजर्षे पृथ्वीराजस्य सनिधाने सत्वै प्राणि(117)भिर्वरत्याग कृत इति वार्तया भ्रमन्त्या हेतुभूतया यत्र चेतसि स्मरारिस्सनिहित स्मरोपि तत्र चेत(118)सि स्थातु सनिधानमकरोत्

1 Ms नत 2 Ms मत° 3 Ms यदाचक (?) 4 Ms cross mark above °य 5 Ms स्त्रय स cross mark above स 6 Ms Read स्वचति 7 Ms भटो 8 Ms चित्ता 9 Ms Is it निनादुरिवैवलाम् ? 10 Ms मोर 11 Ms रह्नाद 12 Ms सङ्ग

पूर्वोक्तस्य श्लोकस्य हेतुमतोयं श्लोको हेतुत्वेन व्याख्येय इति भद्रम् ॥
(1.19), 105.

श्रीश्रीकण्ठचरित्रकाव्यविवृतौ विश्वस्य निश्वस्य च
च्छायाभाजि किरातकाव्यविवृतौ विश्रम्य रम्य(1.20)श्रियि .
पृथ्वीराजजयाख्यकाव्यविवृतौ संवेशमिच्छाम्यहं
शाखचोदजखेद[मेदु]रमतिर्ज्योत्स्ना(1.21)भिधो लावणिः ॥.

श्रीलोलराजसुतपण्डितभट्टनोन-
राजात्मजो विवरणेन स जो[नराजः] .
[स](1.22)र्गे दशान्त्यमकरोत्सुरमत्र पृथ्वी-
राजाख्यराजविजयाभिधकाव्यराजे ॥[1]

1 Ms. ॥ ९...... (1,23 a).

## [ द्वादशः सर्गः ]

⏑⏑–⏑⏑–⏑⏑–⏑–

[निपुणध्यानफ]ले विलोचने .
नृपतेः [सम]योपयोगिनं
द्विगुणीभावमिवाधि[जग्मतुः] ।।[1]

............निपुणं कृत्वा ध्यानमेव फलं ययोस्ते नेत्रे तत्कालोपयोग्यं द्वै............[2].... .......कामित्वादिति भावः ।। 1.

अमृतभपया तया दृशो-
र्विषयं भू[3]मिपतेः प्रयातया .
यदियाय रुचिर्न मन्दतां-
मनुकूलो विविदे विधिस्ततः ।।

हर्षकारित्वाद[4]मृतपुष्करिण्या तिलोत्तमया राज्ञो नेत्रविषयमागतया रुचिर्मन्दतां यन्न गता दर्शनतृप्तिर्नाभू[5]दित्यर्थः ।। 2.

नयने श्रवणे मनश्च य-
त्समभेव व्यकसन्महीभुजः .
विपुलीकृतलक्ष्यपञ्चक-
स्सुकृती[6] पंचशरस्ततोभवत् ।।

राज्ञो दृशौ कर्णौ मनश्च युगपदेव यद्विचकासे ततो हेतोः पश्च लक्ष्याणि[7] गोचरीकुर्वन्पञ्चशरस्सुष्ठुं कृतकृत्योभवत् . पंचानां शराणां युगपल्लक्ष्यपंचकप्राप्तेः ।। 3.

---

1 Ms °लो. 2 Ms °पते. 3 Ms. चन्द्र°. 4 Ms. °स्मृत°. 5 Incomplete
6 Ms.°वयो. 7 Sic. Is it सफली°? or, better, विषयी°?, 8 Sic ! 9 Ms. °पु.

प्रविवेश(15) [विनिर्य]यौ च य-
न्नयनाग्नेर्मदनः पिनाकिनः .
नृपतिं प्रबलप्रतापम-
प्युपसर्पन्नत एव नात्रसत् ॥

ह(19)रस्य नेत्राग्निं कामः प्राविशन्नेत्राग्नेर्यश्च निर्गतस्ततो महाप्रतापमपि राजानं प्रवि(110)शन्नात्रसत् . अग्निं सेवमानस्य तापत्रासाभावात् ॥

मिलितभ्रमरालिकालिकं
बहुभेदैः कुसुमैः(111) कृतं धनुः .
स्वकरादिव जिष्णुनार्पितं
क्षितिजिष्णोर्विजिगीषया वहन् ॥

मिलितेत्यारभ्योपकं(112)तुमित्यन्तं कामवर्णनपरं कुलकम् ॥

भ्रमरालिरेव कालिका मेघपंक्तिरपि मिलिता यत्र त(113)था वर्णवैचित्र्याद्बहुभेदैः पुष्पैः कृतं धनुर्दधत् अतस्संभाव्यते क्षितिजिष्णो राज्ञो विजिगीषया(114) हेतुभूतया इन्द्रेण स्वहस्तादिव दत्तम् तद्धि मेघपंक्तिसहितं बहुफलं च भवति . क्षितिजिष्णोरि(115)ति साभिप्रायम् ॥ 5.

अलिपंक्तिमयं मुहुर्मुहु-
र्मकरन्दाङ्कितमास्पृशन्गुणम् .
विरलाग्निशि(116)खाधिवासितं-
प्रतिपक्षेक्षणधूमधूसरम् ॥

भ्रमरमालामयं रजोयुक्तं गुणं पुनः पुनस्स्पृशन् अल्पाभि(117)रग्निज्वालाभिस्सहितो यः प्रतिपक्षस्य हरस्य नेत्रधूमस्तेन धूसरम् ॥ 6.

---

1 Ms. 'दमन' 2 Is it 'येच'? 3 Ms. तीव्रप्रतापमपि crossed after 'न. 4 Ms 'ज्ञानवस'. 5 See verse 8, below. 6 Ms. 'सिताग्र'. 7 Ms. 'यत्र'.

त्रिदिवोपवने फलन्ति(1.18) ये
तरवः पञ्च यथामनीषितम् .
स्वयमेव समर्पितं नय-
नृजुतां तैः कुसुमेषुपञ्चकम् ॥

ये(1.19) नाके वृक्षाः प्रार्थितं ददति तैरिव पुष्पशरपञ्चकं दत्तं ऋजुतां नयन् ॥ 7.

उपकर्त्तुमुपेतमप्युमा(1.20)-
मुपनीयाज्वलयद्य एव माम् .
तमसौ वरिवस्यतीत्यभू-
न्मदनो योद्धुमनाः क्षमाभुजम् ॥(1.21)

·········य्योपकर्त्तुं प्राप्तमपि मां योदहदेव तं हरमसौ राजा सेवत इतीव राजानं प्रहर्तुका(1.22)[म इव कामोभू]त् . योद्धुमना इति पाठ आर्षः ॥ 8.

रजसा कपिशा दिशो बभूवु-
र्धनुराकर्षति कौसुमं(1.23) [मनोजे] .
[व]निता इव पत्युरप्सरो-
विषयां वीक्ष्य हठप्रतारणाम् ॥

कामे पुष्पचापं कर्षति र(1.24‥80)जसा कपिशा दिशो बभूवुः निजस्य पत्युः पृथ्वीराजस्य तिलोत्तमा···············(1.1) 9.

शरगोचरतामनीतयो-
र्नियतं शिक्षितमस्त्रविद्यया .
पुरतो गुह[रामयो]⏑—
⏑⏑—⏑⏑—⏑—⏑— ॥(1.2)

1 Which is the अनार्ष reading ? 2 Ms. °लता 3 Ms °षयाणी°.
4 Ms. °रयम्. 5 Ms. °तिरः°. 6 Ms. has पृ. रा. ह्य. on margin.

ब्रह्मचारित्वात्कामेन शरविषयभावं न नीतयोः कुमाररामयोरग्रे का- ·· ···········(13)रोऽपि भूभृतं पर्वतमपि भिन्नवान्. तौ हि क्रौञ्चाद्रिं विभिदतुः ॥ शिक्षितयास्त्रविषये(15)ति पाठस्समीचीनः ॥ 10.

कमलासहजन्मजन्मनैः
सुधया(14) हालहलेन चोक्षितैः.
कुसुमास्त्रशरैर्वशं ययौ
सममानन्दविमोहयोर्नृपः ॥ 11.

चतुरश्चतुरश्शरानर्था-
दसमास्त्रः परिवर्ज्य मारणम्.
हृदि तस्य ततस्तिलोत्त(16)मा
सचतुर्द्वार इव न्यविक्षत ॥

चतुर आशुकारी कामो मारणनामानं शरं वर्जयित्वा चतुरश्शरान्यान्नि(17)हितवांस्ततश्चतुर्द्वारसहितें इव चेतसि तिलोत्तमा प्रविष्टा ॥ 12.

तेषां चतुर्णां शराणां कर्माण्याह ॥(18)

समगुह्यदवाधि निद्रया
समतापि प्रललाप चापदे.
इति तस्य चतुर्दशे मनो-
भवने स्वाम्य[मवाप(19) साप्सराः?] ॥

राजा संमोहं प्राप्तवान्. निद्रया स बाधितः. राजातप्यत. राजा अस्थाने च प्रलापं कृतवान्(110). एवं चतस्रो दशा यस्य तस्मिन्राज्ञो मनोगृहे स्वाम्यमैश्वर्यं तिलोत्तमा प्रापत्. गृहं च चतुर्भूमिकं भव(111)ति ॥ 13.

1 Ms. This part of Comm is given after verse 11. 2 Ms. 'जस्तु'.
3 Ms. 'मोतृ'. 4 Ms. No Comm on verse 11. 5 Ms. 'न्यथा'.

अणिमानमतिप्रसादिता-
द्द्युपतेर्जातुचिदाससाद सा .
मतिमम्बुजनालवद्यत-
रशुचिसूक्ष्मां(l.12) प्रविवेश भूपतेः ॥

अतिसेवितादिन्द्रात्सा तिलोत्तमा कदाचिदणुत्वं प्रसादं प्रापत् यतो हेतोर्मृणा(l.13)लसूत्रवच्छुचिं सूक्ष्मां मतिं राज्ञः प्रविष्टा. अणुरेव हि सूक्ष्मं प्रविशति. इन्द्रश्च मृणालनालं·········(l.14)अवंधे(?) प्राविशदित्यागमः ॥ 14.

सहजस्य तरोश्शरीकृतै-
र्हृदि रुद्धे कुसुमैर्मनोभुवा .
मुमुदे मुखदेव(l.15)ता रमा
नृपतेश्श्वाससमीरसौरभैः ॥

लक्ष्म्यास्सहजस्य तरोः पारिजातस्य पुष्पैश्शरीकृतैः कामेन रु(l.16)द्धे सति हृदि राज्ञो निश्वाससौगन्ध्यैर्मुखदेवता लक्ष्मीर्मुमुदे तुष्टा ॥ 15.

अमरत्वमु⏑–⏑–⏑रं(l.17)
प्रविशन्त्येव हृदि द्युयोपिता .
नृपतेर्द्दनिमेपतां दृशा-
वतिमात्रं विभरांबभूवतुः ॥

·········[प्रवि](l.18)शन्त्या सुरस्त्रिया देवत्वमिवोपायनीकृतम् यस्माद्राज्ञो दृशौ निर्निमेषभावमवहता[म्. देवा हि निर्नि](l.19)मेषाः ॥ 16.

द्युवधूपरिरम्भसाक्षिणः
प्रथमे स्मो वयमेव भूभुजः .

1 Ms. °दम. 2 Is it इते वृत्रवधे प्रा°? 3 Ms. रसा. 4 Ms. °दमा°. 5 Is it °त्वमुपायनीकृत°. 6 Ms. °मेस्सौ.

इति नूनमहर्षि रोमभि-
र्मक(120)राङ्काशुगपत्त्रवात्यया ॥

आद्यास्तिलोत्तमालिङ्गनसाक्षिणो वयमेव स्मो भवामः इत्यतो हेतो-
र्नू(121)नं रोमभिरहर्षि हृपितम्. अत्र हेत्वन्तरं संभाव्यते. कामशरपत्त्र-
वातैः. साक्षिण इत्यारोपः वि(122)शेषणेन नपुंसकता स्यात् ॥ 17.

कतिचिन्निपतन्कणास्ततो
नयनाभ्याममृतं न्यपायि यत्.
⏑⏑⏑⏑⏑–(123*)⏑⏑⏑–
⏑⏑⏑⏑⏑[घर्मबिन्द]वः ॥

राज्ञा तिलोत्तमादर्शनामृतं यत्पीतं ततः कणा एव·········(1.1)
···········[ग]ण्डयोर्मध्ये घर्मकणाः पतिताः. नामी घर्मकणाः किन्तु
पीतस्य(1.2) तिलोत्तमामृतस्य कणा एवेत्यर्थः ॥ 18.

ददृशेऽङ्कमिवाधिरोपिता
पुलकाङ्केन मुखेन तस्य सा.
हरिणं(13) शशिमत्सरादिव
प्रगुणैर्गीतगुणैर्जिघृक्षया ॥

कामवशादभूतार्थदर्शिना तस्य रोमाञ्चितेन मु(14)खेनाङ्कमिवाधिरो-
पिता जनेनं ददृशे संभाविता. अङ्काधिरोपणे हेतुमाह. तिलोत्तमासंबन्धि-
भिर्गीतगुणैर्हे(15)तुभिर्हरि[णं गृही]तुकामेनेव चन्द्रमत्सरात् हरिणानय-
नार्थमिवाङ्कं तिलोत्तमारोपितेत्यर्थः ॥(16) 19.

परिरक्षितव[र्ण]संस्थिति
नृपमेताव्रति मण्डले भुवः.

1 Ms. °[illegible]. 2 Ms. °[illegible]. 3 Ms. °[illegible]. 4 Ms. °[illegible]. 5 Ms °[illegible] lc. under l. 4. 6 Ms. [illegible] lc. under l. 5 7 Ms. °[illegible]. 8 Ms. °[illegible].

अपदेगमयद्विवर्णतां
प्रथमो विप्लवका(1 7)रिणां स्मरः ॥

परिरक्षिता वर्णानां ब्राह्मणादीनां संस्थितिर्येन तं राजानमुपद्रवकारिणामाद्यः कामो वि(1 8)भिन्नो वर्णो मुखरागो यस्य तद्भावमपदेसयत्. वर्णरक्षितुर्वर्णनाशनमनुचितमित्यर्थः ॥ 20.

पदमै(1 9)न्द्रमुपेत्य दर्शित-
स्सकलेस्मिन्नवनीतले पुरा.
त्रिदिवप्रमदानुरागिणा
स्वरभेदश्चरमन्तु जल्पिते ॥(1.10)

ऐन्द्रं पदं प्राप्य राज्ञा भूतले स्वरभेदः स्वर्गाभेदः प्रथमं भूतले दर्शितः चरमं पश्चाज्जल्पिते(1.11) कथासु स्वरभेदस्वरसादो राज्ञा तिलोत्तमानुरक्तेन दर्शितः ॥ 21.

अयमेष्यति दिव्यमूर्त्तिता-
मनुर(1 12)क्तस्त्रिदिवाङ्गनां प्रति.
इति भूरमणस्य मानुषी
प्रचकम्पे तनुरौपचारिकी ॥

तिलोत्तमाया(1.13)मनुरक्तोयं मानुषीं मूर्त्तिं त्यक्त्वा दिव्यां मूर्त्तिं पुनर्महीष्यतीतीव राज्ञ औपचारिकी कार्यसिद्ध्य(1.14)र्थमभिनीता मानुषी तनुः कम्पते स्म ॥ 22.

अविलम्बितमीयुरुष्णतां
शिशिराः प्राक्प्रमदाश्रुशीकराः .(1 15)
⏑⏑–⏑⏑–⏑–⏑–
शशिनस्स्थान इव त्विषा रवेः ॥

---

1 Ms. 'र्ण्णु'. 2 Ms. 'ङ्ग थौ'. 3 Ms. 'र' म'.

प्रथमं तद्दर्शनजाता हर्षयाप्यकणास्तूर्ण(1 16)[मुष्णत्वं] गृहीतुमैच्छन् अतस्संभाव्यते चन्द्रस्य स्थाने कामेन धृतस्य रवेस्त्विषैव तापिताः कामेन च(1.17)न्द्रो रोजसन्तापनार्थं सूर्यः कृतः तद्दीप्त्यैवोष्णा इत्यर्थः ॥ 23.

हृदये लिखितां पुरः स्थिता-
दपि चित्राद्रु(1.18)चिरां ददर्श यत् ।
अविदत्परमार्थतस्ततं-
स्स मनोराज्यमनोतिशायिनीम् ॥

अग्रस्थाचित्रादप्यति(1 19)रुचिरां हृदि लिखितां तां राजा यद्दृष्टवांस्ततो हेतो राज्ञैनां मनोराज्येषु मनसा तिलोत्तमाभोगे(1 20)ष्वतिशायिनीं परमार्थतो जायामविदत् । उत्तरोत्तरसाधिक्यदर्शनात्कृपाधिक्यमनुचितमित्यर्थः(?).(1 21) [अ]विददिति चिन्त्यम् ॥ 24.

विकसन्मदने हरेः पदे
सुमनश्चिन्तितकल्पपादपे ।
इति नित्यविकस्व(1 22)[रेवस]-
त्रिदिवोद्यान इवास्य सा हृदि ॥

विकसन्मदनः कामो वृक्षविशेषश्च यत्र तथा हरेर्विष्णो(1 23**81*)-रिन्द्रस्य च स्थाने सुमनसां सज्जन[नां] चिन्तितेषु कल्पपादपे[षु]····-·········(1.1) नित्यविकसिते नन्दनवन इव तस्य चित्ते सावसत् ॥ 25.

स ⏑–⏑⏑–⏑–⏑–
⏑––⏑––⏑–(1 2)प्रदोत् ।
अनुरागरसच्युतोपि ग-
न्मिलितः सात्विकभावसंप[दा] ॥

1 Ms. °स्रग°.　2 Ms. °रिय°.　3 Ms °पूत्रा°.　4 Ms. °न.
5 Ms. °कृ°.　6 Ms. ९-१. on margin.　7 Ms. °न.

...... ......(13)नित्याभ्यां सफलं तत्प्रापत्. यत्सात्विकभावानां कम्पस्वेदादीनां............[संपत्](14)तितोपि मिलितः ॥ 26.

उदभिद्यत घर्मविन्दुभिः
प्रथमं चित्रकरस्य [कौशलात्?].
⏑⏑–⏑⏑–⏑⏑–⏑–(15)
रनु मध्यन्दिनदुन्दुभिध्वनिः ॥

चित्रकरस्य रवेरालेख्यकृतश्च कौ · ·· ......(16) 27.

[Lines 7,8 missing]
शेषं नयने न्यमज्जयत् ॥

चित्रमण्डपे पटहशब्दस्यानुवादिनि संप्रति शब्द इत्य............ (19)तसरासि दृशो निमम मध्याह्नविध्यनुष्ठानार्थमवश्यगमनेन दर्शनविघ्नसंभावन.........(110) 28.

अननन्धमवेक्ष्य तादृशां
क्षितिभर्त्तुस्सुरसुन्दरीं प्रति.
गणयन्नपराधमात्मनो
मनसीत्थं पृ[थिवीभ](111)र्दोभ्यंधात् ॥ 29.

उपमानपदे तिलोत्तमां
यदि मन्त्री विदधे श्रियं प्रति.
अपरीक्ष्य पुनस्तदीदृशं
कथम(112)र्थ तदनूदितं मया ॥

लक्ष्मीं प्रत्युपमानत्वे कदम्बवासस्तिलोत्तमां यदि विदधे तत्तदीदृशमर्थम(113)विमृश्य तदेव मया कथमनुकथितम्. तिलोत्तमाकथैव कथमारब्धेत्यर्थः ॥ 30.

---

1 Ms कप°. 2 Ms °दं०ं. 3 Ms No Comm 4 Ms °नूपि°.
5 Ms °धम°. Ic. mark before °म° but nothing on margin

इदमीदृगनर्थसंश(114)यं
कथमालेख्यगृहं च दर्शितम् .
अनयन्मदनः शरव्यतां
विशतो यत्र महीपतेर्मनः ॥

ईदृगिद(115)शोनर्थविषयस्संशयो यत्र तच्चित्रगृहं कथं मया दर्शितम् यत्र विशतो राज्ञश्चित्तं लक्ष्यतां कामो(116)नयत् चित्तमभिनदित्यर्थः ॥ 31.

क ललाम तिलोत्तमा दिवः
प्रभुता च क मनुष्यमण्डले .
⏑ ⏑ –[1] (117)पुरुषस्य नेदृशी
घटनेयं पुरुषोत्तमं विना ॥

दिवो ललाम भूषणं तिलोत्तमा क भवति [मनुष्यमण्ड](118)ले ऐश्वर्यं क भवति पुरुषोत्तमं विष्णुं विना पुरुषस्य नेदृशी घटना भवति ॥ 32.

इयती ⏑ ⏑ – ⏑(119)मानसीं
रुजमाशा मम हन्तुमीश्वरी .
अभवन्न कदम्बवासवा-
न्नृपतेः काचि[दनर्थकारिणी?] ॥

[म](120)म मानसीं रुजं चिन्तां हन्तुं सेयमाशा परं केवलमीश्वरी समर्था भवति यत्कदम्ब·············(121) राज्ञोनर्थकारिणी नाभूत् ॥ ·········· ॥ 33.

पुरतः पुरुहूतपत्तन-
प्रमदानाम स – ⏑ – ⏑ –[4] (122)
तदवश्यमितोपि सद्भ्रा-
दयमेव द्रुतमुद्धरिष्यति ॥

1 Ms. 'क. 2 Is it कथता? 3 Ms. 'वनिते'. 4 Ms. 'ॡ.
5 Is it पर्यन्ति? 6 Is it ? ब्त चाम्बभार?

············(l.3)नित्याभ्यां सफलं तत्प्रापत्. यत्सात्त्विकभावानां कम्पस्वेदादीनां············[संपत्](l.4)तितोपि मिलित: ॥ 26.

उदभिद्यत घर्मबिन्दुभिः
प्रथमं चित्रकरस्य [कौशलात्?].
⏑ ⏑ – ⏑ ⏑ – ⏑ – ⏑ –(l.5)
रनु मध्यन्दिनदुन्दुभिध्वनिः ॥

चित्रकरस्य रवेरालेख्यकृतश्च कौ············(l.6) 27.

[Lines 7,8 missing]

शेषं नयने न्यमज्जयत् ॥

चित्रमण्डपे पटहशब्दस्यानुवादिनि संप्रति शब्द इत्य············(l.9)तसरसि दृशौ निमग्ने मध्याह्नविध्यनुष्ठानार्थमवश्यगमनेन दर्शनविघ्नसंभावन·········(l.10) 28.

अनुनन्धमवेक्ष्य तादृशं
क्षितिभर्तुस्सुरसुन्दरीं प्रति.
गणयन्नपराधमात्मनो
मनसीत्थं पृ[थिवीभ](l.11)टोभ्यधात् ॥ 29.

उपमानपदे तिलोत्तमां
यदि मन्त्री विदधे श्रियं प्रति.
अपरीक्ष्य पुनस्तदीदृशं
कथम(l.12)र्थे तदनूदितं मया ॥

लक्ष्मीं प्रत्युपमानत्वे कदम्बवासस्तिलोत्तमां यदि विदधे तत्तदीदृशमर्थम(l.13)विमृश्य तदेव मया कथमनुकथितम्. तिलोत्तमाकथैव कथमारब्धेत्यर्थ: ॥ 30.

---

1 Ms. कार. 2 Ms. ट्रोर. 3 Ms. No Comm. 4 Ms. नृचि. 5 Ms. र्थम. lc. mark before म. but nothing on margin.

इदमीदृगनर्थसंश(1.14)यं
कथमालेख्यगृहं च दर्शितम् .
अनयन्मदनः शरव्यतां
विशतो यत्र महीपतेर्मनः ॥

ईदृगीदृ(1.15)शोनर्थविपयसंशयो यत्र तच्चित्रगृहं कथं मया दर्शितम् यत्र विशतो राज्ञश्चित्तं लक्ष्यतां कामो(1.16)नयत् चित्तमभिनदित्यर्थः ॥31.

क ललाम तिलोत्तमा दिवः
प्रभुता च क मनुष्यमण्डले .
⏑ ⏑ –[1] (1.17)पुरुषस्य नेदृशी
घटनेयं पुरुपोत्तमं विना ॥

दिवो ललाम भूपणं तिलोत्तमा क भवति [मनुष्यमण्ड](1.18)ले ऐश्वर्यं क भवति पुरुपोत्तमं विष्णुं विना पुरुपस्य नेदृशी घटना भवति ॥32

इयती ⏑ ⏑ – ⏑[2](1.19)मानसीं
रुजमाशा मम हन्तुमीश्वरी .
अभवन्न कदम्बवासवा-
न्नृपतेः काचि[दनर्थकारिणी?] ॥

[म](1.20)म मानसीं रुजं चिन्तां हन्तुं सेयमाशा परं केवलमीश्वरी समर्था भवति यत्कदम्ब············(1.21) राज्ञोनर्थकारिणी नाभूत् ॥ ·········· ॥ 33.

पुरतः पुरुहूतपत्तन-
प्रमदानाम स– ⏑ ⏑ – ⏑ –[5].(1.22)
तदवश्यमितोपि सङ्कटा-
दयमेव द्रुतमुद्धरिष्यति ॥

---

1 Ms. °क. 2 Is it चरवा ? 3 Ms. °पतिनो°. 4 Ms. °ती.
5 Is it परमस्ति ? 6 Is it स एव चाभ्यधात् ?

स एव प्रथमं तिलोत्तमाना[म]............(123*).........रि-
ष्यति ॥ 34.

विदधात्ययमुत्तमं यदि
प्रभुभक्त्या पृथिवीबृहस्पतिः .(1.1)
⏑ ⏑ – ⏑ ⏑ –[तिलोत्तमा
सदनं स्वामि]कृते प्रवेक्ष्यति ॥

पूर्वश्लोकार्थमेव प्रपञ्चयति . स्वामिभक्त्यायं(1.2)..............
[तिलो]त्तमा स्वयमेव स्वामिकृते गृहमेष्यति ॥ 35.

नैतदाश्चर्यमित्याह ॥(1.3)

⏑ ⏑ – ⏑ ⏑ – ⏑ – ⏑ –
⏑ ⏑ – – – ⏑ कचं सुराङ्गना .
अजमिन्दुमतीमयेन वा
वपुषा किं हरिणी न शिश्रि(1.4)ये ॥

..............नाभ्यलपत् इन्दुमतीरूपेण हरिणीनाम्नी नाकस्त्री
किं नाजमश्रयत् ॥(1.5) 36.

⏑ ⏑ – ⏑ ⏑ – ⏑ – ⏑ –
⏑ ⏑ – – – ⏑ जितोपि मन्मथः .
इममेकशरीरमेव किं
हृदयस्थोपि न वेद शूलि(1.6)[नः] .

............काम इमं राजानं हरस्यैक[शरीरं](1.7)[न वेद]. 37.

तदवश्यमसौ तिलोत्तमा
द्युनदीवावततार भूतलम् .

1 See p. 156, note 3. 2 Ms. 'य'.

अचिरादपि पत्युरेकता-
मु(1 8)[पयाता] ~ह्रादिनीपतेः ॥

ततो हेतोर्गङ्गेव तिलोत्तमा निश्चित भूतलमवतीर्णा सा वा(1 9)-
[हिनीना से]नाना नदीना च पत्युर्नृपस्य समुद्रस्य चैक्यमुपयाता गन्ता.
याते कर्तरि लुट् ॥ 38.

इति बुद्धि(1 10)बलेन दुस्तरा-
दपि चिन्ताजलधेस्समुद्धृतः.
वदतामिव धर्मनन्दनः
प्रथमस्सत्यवता व्यजिज्ञ(1 11)पत् ॥

दुस्तरादगाधादपि चिन्तासमुद्रात्पूर्वोक्तबुद्धिबलेनोद्धृतस्स पृथिवीभटो
वदता वाग्मिनामा(1 12)द्यो व्यजिज्ञपत् यथा सत्यवता युधिष्ठिर आद्य ॥39

त्वयि पार्थिव चित्रपुत्रिका-
चिरसदर्शनबद्धलोच(1 13)ने.
स्मयमान इवादिपूरुषो
रविरन्तर्गगन विलम्बते ॥

हे राजस्त्वयि चित्रस्त्रियाश्चिर सदर्श(1 14)नार्थ कौतुकवति सति सा-
श्चर्य इव तव पूर्वपुरुषस्सूर्यो मध्येगगन विलम्ब करोति ॥ 40.

क्षणमात्रमिना(1 15)वमर्यमा
तुरगाणा खुरदीर्घिकातटे.
त्यजति व्यपनेतुमुद्यमं
गगनाग्रक्रमणश्रमजमम् ॥(1 16)

·· ·· श्वाना नभोलङ्घनखेद निवारयितुमिव क्षणमादित्य उद्यम
त्यजति ॥ 41.

---

1 Is ;; 'ধ্ব'. 2 Ms दन्त 3 Ms 'नाद'. 4 Ms 'ष्ट्न्.

नलिनीमभितो(।17) ⏑ — ⏑ — [1]
करसंस्पर्शवशेन भास्वतः .
अवलोक्य निराशयात्मनि
कृशिमानं जननी शनेरगात् ॥

सू(।18)··················[प]द्मिनीं दृष्ट्वा निराशयाशाभावेनेव शनेस्सौरस्य जननी छाया ह्रस्वत्वं ग(।19)[तवती]·········माशाभावेनेति हेतूत्प्रेक्षणं . तृतीयासप्तम्योर्बहुलमित्यर्थ ॥ 42.

शनिमातरि पा(।20) ⏑ — ⏑ —.
⏑ ⏑ — — ⏑ तिमात्रमल्पताम् .
लिखितैरिव चित्रदर्शिनि
त्वयि पृथ्वीपतिभिः(।21) [प्रतीक्ष्यते] ॥

·············भिर्नृपसेवकैरसह शनिमातरि च्छायायामल्पतां मध्याह्नजातं ह्रस्वत्वं(।22)··············रिव राजभिश्चित्रं पश्यति त्वयि प्रतीक्ष्यते . मध्याह्ने हि सेवका देवकार्यवशाद्बिर(।23**62)लीभवन्ति ॥ 43.

इति चित्रगतामराङ्गना-
मुखपेयूषमयूखमण्ड[लात्] .
⏑ ⏑ — ⏑ ⏑ — ⏑ — ⏑ —
⏑ ⏑ — — ⏑ ⏑ (।1)राज भारती ॥

चित्रलिखिततिलोत्तमामुखचन्द्रमण्डलाद्राजने·········(।2) 44.

प्रथमानुचरस्मरेच्छया
प्रतिमोक्तुं नृपसामवायिकान् .

1 Is it निस्स्वरी ? 2 Ms. 'रात्यमात्म'. 3 Ms 'नरजनी'. 'र' crossed out and 'न' ie under 'ज'. 4 Ms. 'समागा'. 5 Ms. 'इप'. 6 Panini 2. 4. 84 7 Is it पार्थिवानुगैः सह यान्त्यामति' ? 8 Ms. 'स्ड्रादन'. 9 Ms. 'त्मम'.

पृथिवीभ[ट एव]–⏑⏑–

⏑⏑—⏑⏑–⏑–⏑– .(l.3)

प्रथमोनुचरो यस्स्मरस्तदिच्छयेव नृपान्त्सांमवायिकांश्च प्रतिमोक्तुं···
·········(l.4)वारयत् यदि राजैतान्प्रत्यमोदयत्तदा काममोहितत्वाचेषा-
मुचितां प्रतिपत्तिं नाकरिष्यदतो मागध एव प्र(l.5)तिमुक्तवानित्यर्थः ॥ 44.

मनसा सह चक्षुरिन्द्रिये
नृपतेश्चित्रमृगीदृशा हृते ।
विरहान्धतयेव नेन्द्रियैः
परिशि(l.6)ष्टैः प्रसृतं स्वकर्मणि ॥

तिलोत्तमया राज्ञश्चित्ते नेत्रे च हृते सति शेषैः कर्णादिभिरिन्द्रियैस्स्व-
कर्मणि [श्रवणा](l.7)दौ न प्रवृत्तम् । अतस्संभाव्यते विरहेणान्ध्यात् ॥ 45.

अमृणोदमृतस्नुतश्श्रुते-
र्न वहिर्गायत एव [वन्दिनः] ।
[ह](l.8)रिचन्दनवारिणोक्षितं
शिशिरं नावजगाम कुट्टिमम् ॥

श्रुतेः कर्णयोरमृतस्नुतो वहिर्गायतो गायनान्स नैवा·········(l.9)
हरिचन्दनसिक्तां शीतलां भुवं च नाचेतयत् ॥ 46.

न रदक्षतभाग्यभागिता-
मनयन्नागरखण्डवीटिकाम् ।
घन(l.10)साररसानुसारिणा
न जलार्द्रापवनेन पिप्रिये ॥

1 Ms. 'पारक्षा'. Cf. p. 5, note 3. 2 Ms. 'स्तै'. 3 Ms. 'मर'. 4 Ms. 'दो'.

स ताम्बूलवीटिकां दशनच्छेदेन भाग्यवत्त्वं नानयत्. न च(1 11) कर्पूरार्द्रेण जल·········वायुनासावतुष्यत् ॥ 47.

स्थिरतया सुरसुभ्रुवा मन-
स्युपदिष्टैरिव मन्थरैः पदैः .
त्रि(1.12)दिवादविशिष्टतस्ततो
निरगाच्चित्रगृहात्कथंचन ॥

चित्रस्थयाप्सरसोपदिष्टैरिवालसैः पदैः स्वर्ग(1 13)सकाशादभिन्नात्तत-श्चित्रगृहात्स निर्गतः ॥ 48.

कृतमाङ्गलिकादिकाह्निकः
प्रतिमुच्य क्षितिपं शनैः शनैः (1 14) .
तरणेस्तरुणिम्नि तेजसां
शिथिले वन्दिपतिर्विनिर्ययौ ॥

कृतं माङ्गलिकमाह्निकं मागधोचितं कर्म ये(1 15)न स वन्दी राजानं प्रतिमुच्य सूर्यतेजसि मन्दे सति शनैश्शनैर्निर्गतः ॥ 49.

इयदाधिभराङ्कमुद्वहे-
दधि——(1 16)पि किमेष मामिति .
उपनीतमपि स्वसेवकैः
पुरतो नाधिरुरोह वाजिनम् ॥

इया[नाधि]भरो यस्य(1 17) वाह·········दर्श मामतिसमर्थोप्येपो-श्वो मां किं कथ··············(1.18)नीतमपि नारोहत् ॥ 50.

भविता तव पालकं प्रति
ध्रुवधूः केन पथानुरागिणी .

1 Ms भाग्यत्व.
2 Ms. °सो तु°.
3 Ms. स्थिद°. Is it स्थितया ?–
4 Ms. °वधू°.

अवनम्रमुखो मुहुर्म[हा](l 19)-
निति पृच्छन्पृथिवीमिवागमत् ॥

तव भोक्तारं राजानं प्रति तिलोत्तमानुरक्ता केनोपायेन भवि[तेती]-(l.20)व भूमिं पृच्छन्नतमुखस्स गृहं गतवान् ॥ 51.

शतशोपि विकल्पकल्पना-
चतुरे चेतसि या न दि[द्युते](l 21) .
उदभावि तया स्फुरत्तया
रभसादक्षिणि तस्य दक्षिणे ॥

शतवारं विकल्पानां कल्पनायां·········(l 22)णे विषये चतुरे तस्य चित्ते या नाद्युतश्चिन्तावशात्तस्य चित्ते जात्वपि नास्फुरदित्यर्थः तया·········(l.23)न तस्य दक्षिणनेत्रे सहसा जातम् . स्फुरत्ता प्रतिभा स्पन्दश्च ॥ 52.

स शरीरगुणोस्य कश्चन
⏑⏑–––⏑⏑[द](l 24)र्शनोत्सवम् .
स्फुरणं स्फुटमेव चक्षुषा
यदवामेन सदानुभूयते ॥

कश्चन वक्षु············(l.25*)············महता लाभः यतो दक्षिणेन नेत्रेण सदा स्पन्दोनु(l.1)[भूयते] . 53.

⏑⏑–⏑⏑–⏑–⏑–
⏑⏑–दर्शनमात्रकं फलम् .
अपरिश्लथमानसज्वरः
मंभुभक्तपेकंपरोवि(l.2)[शदगृहम्] .

1 Ms. °गाम. 2 Ms. °नता°. 3 Ms. °श्चिन्तु°. 4 Ms. °ध.
5 Ms. स्तो°. 6 Ms. °स्त°. 7 Ms. °येकन्दो°.

·········दर्शनमेव फलं जानन्सोशिथिलचिन्तस्स्वामिभक्तिपरो गृहम(1 3)विशत् ॥ 54.

अ[चिरेण?] मनोरथः प्रभोः
फलितस्स्यादिति चिन्तयन्नसौ ।
प्रथमोपगतेन केनचि-
त्पठितं(1.4) [श्लोकमिमं तदाशृणोत्?] ॥

राज्ञोभिलापस्सफलोपि स्यादिति विमृशन्स केनापि नवागतेन पण्डितेनेमं पठि(1 5)·········शृणोत् ॥ 55.

सलिलादपि निर्ययौ रमा
धरणेरप्युदपादि मैथिली ।
दहनादपि याज्ञसे[निका](1 6)
[किम]लभ्यं पुरुषार्थशालिनाम् ॥

समुद्राल्लक्ष्मीरुदभूत् भूमे·········अग्नेरपि द्रौपदी(1.7)·········
*शालिभिः किं न लभ्यते ॥* 56.

समयानुगुणैरुपश्रुति-
श्श्रुतिपेयूपविलासवापिका ।
उपताप(1.8) ⏑ ⏑ ⏑ ⏑
शिथिलीकर्त्तुमिवोपचक्रमे ॥

श्रुतेः कर्णस्यामृतपूर्णक्रीडापुष्करिणी यतस्तत्कालो(1.9)चित······स्तादृशं तापं स्वल्पीकर्त्तुमिव प्रारेभे ॥ 57.

कविपण्डितचक्रमेलकं
प्रणमन्प्रांञ्जलिरेप(1.10) — ⏑ —'.

---

1 Ms. 'नभेक'. 2 Ms. 'कलु'. 3 Ms. 'मत्र'. 4 Is it मागधः ?

उपहूय स पद्मनाभ इ-
त्यवदद्विग्रहराजमन्त्रिणम् ॥

कविपण्डितानां चक्रेण मेलकं(1 11) नमस्ते पद्मनाभ इत्याहूय विग्रह-
राजामात्यमित्यवदत् ॥ 58.

इदमन्यपरं वचो जगौ
कविता कश्च पपा(1 12)ठ चात्र कः.
कतमश्च विपश्चिदेप यो
निविडोष्णीपर्दुरीत्यकुन्तलः ॥

कः कविरिमं श्लोकं कृतवान् कश्चो(1 13)क्तवान् निविडेनोष्णीषेणादृश्य-
[केशः]·· कतम.. काश्मीरप्रक्रि[या] · विध्यम् (?)॥ 59.

तमुवाच स योय(1 14)— ⏑ ⏑ —
प्रथमे प्रश्नयुगे स एव ते.
यदि सत्यमवैपि मद्वच-
श्चरमं पृष्टमहं ब्रवीमि तत् ॥

योयं विपश्चि(1 15)त्स तव प्रश्नयुगस्योत्तरम्. स एव कविः पा-
ठकश्चेत्यर्थः. यदि मद्वचस्सत्य जानासि तदा कोयं विप(1 16) ······ -
··· ॥ 60.

इति वादिनमेन— ⏑ ⏑ —
⏑ ⏑ — — ⏑ ⏑ —[स] वन्दिनाम्.
क्षणम(1 17)[प्यनृत] ⏑ — ⏑ —
⏑ ⏑ — — ⏑ ⏑ —[मुखा]म्बुजे ॥

तव मुखपद्मेऽसत्यजलकणाः क्षणमपि न तिष्ठं(1 18)न्तीति पृथिवी-
भटः पद्मनाभमवदत् ॥ 61.

1 Ms नमस्त See above, p 303, note 1 2 Ms 'मश्चि'. 3 Ms निरि'
4 Ms 'शड्' 5 Ms काय 6 Ms 'ष्ट'

पृथिवीभटमुक्तवन्तमि-
त्यवदन्मानधरो महत्तमः .
मिहिरो(l.19)[न्यगुणप्रकाशने]
परदोपावरणे महत्तमः ॥

स मानी महत्तम एवमुक्तवन्तं पृथिवीभटमित्यवदत्(l 20)·········
प्रकाशने सूर्यः परेषां दोषाच्छादने महानन्धकारः . 62.

विबुधश्च कविश्च शारदा-
य⏑⏑——⏑⏑(l 21)[मण्डला?]दयम् .
निगमागमतीर्थतापस-
प्रथमोद्यागतवाज्ञ[यान]कः ॥

पण्डितः कविश्च तथा नि(l 22)·········[ज]यानकश्च [शारदा]क्षे-
त्रात्कश्मीरमण्डलादागतः ॥ 63.

युगपत्सुमं(l.23)—⏑—⏑—
⏑⏑——⏑रुदेत्यमुष्य धीः .
अमुनैव सुतेन शारदा
गिरिकन्येव गुहेन नन्दति ॥

सुमन(l.24**63) 64.

[Six lines at the beginning of page missing]

शशिखण्डशिखण्डमण्डनं
प्रति निर्वेदनिवेदनं व्यधात् .

············(l 7)या पूजया हेतुभूतया चन्द्रावचूडाभूषणं हरं प्रति
बन्दी··············· ॥ 65.

---

1 Ms 'न्द्रा'. 2 Ms. 'खुम'.

किल प्रसिद्धौ पुमान्मनुष्य······(l.16)रुपमन्युनामा संपन्नस्तस्य महामुनेर्गुरो···············(l.17)रक्षति. हरेणोपमन्यवे यो दत्तः. उपमन्युर्नारायणस्य दी[क्षागुरुरासीत् ?]············ 69.

[उप](l.18)मन्युकुलादपोहितुं
न पटुर्गोत्रपरम्परागतम्.
कलिं–⏑⏑–⏑–⏑–⏑–
⏑⏑––⏑⏑––⏑–(l.19)धनम् ॥

कुलक्रमागतं शिवभक्तिधनमुपमन्युस···············(l 20)स्य सन्ततिरुमपर्याप्तत·········हरेभक्तिसु···············(l 21)मेण प्राप्तमस्य शिवभक्तिधनस्य·················(l.22)स्यां विरोचनस्सूर्ये··· ··············(l 23*) 70.

[Six lines at the beginning of page missing]

·················व निमीलितचक्षु···················(l.7)- ··················तोपिता शारदा सूर्योदये·········चितनेत्रस्य दर्शन(l 8)- 71.

⏑⏑–⏑⏑–⏑⏑–⏑–
[चरणसौस्नातिकरत्ननू]पुरम्.
चरणं च निधा[य]–⏑–
⏑⏑–मि [1]त्रिदिवीकृत(l.9)⏑– .

·········गङ्गाजलं तत्र स्नानेन हेतुना चरणं सुस्नातं पृच्छद्रत्ननूपुरं यस्य(l.10)········· 72.

कवितां पथि पद्विधे गिरा-
मसि मां पङ्भिरुप⏑––⏑–(l.11)

1 Ms. 'सिधौ. 2 Ms. क्रिज़ि ? 3 Ms. हरि'. 4 Ms. 'मिति'.
5 Ms. 'सुस्नातर'. 6 Ms. 'र'.

⏑⏑—⏑—⏑—⏑—
⏑⏑——⏑⏑⏑—⏑—⏑नात् ॥

षड्भिर्जन्मभिर्मां सेवित्वा पङ्घिपे प्राकृतादिप(1 12)············त-
वांस्तां कवितां मनुष्यरूपस्य हरेर्वद्यमाणदशा पृथ्वीरा(1 13)[ज]·······
····· त्यर्थः ॥ 73.

पुरुहूतपुराङ्गना पुरा
परिखिन्ना चिरलास्यलीलया (1 14) .
⏑⏑—⏑⏑—⏑—⏑—

⏑⏑——⏑⏑——⏑विग्रहा ॥

चिरं नृत्यक्रीडया श्रान्ता तिलोत्तमाप्सरा गङ्गाया(1 15)······ 74.

⏑⏑—⏑⏑कारत्रिन्दिनी-
हठमेलापधियागतं विदन् .
पुलिनात्तृपि(1 16)[ता]⏑—⏑—
⏑⏑——⏑⏑—⏑—⏑— ॥

पद्मिनी हठेन मेलापे धिया वाञ्छया आगतं चन्द्रं जान(1 17)···
···वनूढवान्. 75.

दलित⏑⏑—⏑—⏑—
⏑⏑——⏑⏑—⏑(1 18)—⏑— .
⏑⏑—⏑⏑—⏑⏑—

रमणं पद्मवनस्थितास्मरत् ॥

दलितानां मुक्तानां······(1.19)···············ली तया भयङ्करं
तथाविधं वीद्य पद्मवने वर्तमा(1.20)[ना]······ 76.

---

1 Ms. °वास्ताक°. 2 Ms. °भिनो. Can it be °भिन्या ? 3 Ms. °न्द्रजा°.

⏑⏑–⏑⏑–⏑–⏑–

स्मरणानन्तरमेव दर्शनम्.
यददीयत येन स श्रियो
वश(l.21)——⏑⏑–⏑–⏑–

·········[स्मर]णकाले एव तद्दर्शनं दत्तं येन हेतुना जनेन सह (l.22)··············. 77.

⏑⏑–⏑⏑–⏑–⏑–

⏑करं नाकनदीतटस्थितः.
⏑⏑(l.23)–⏑⏑––⏑––⏑–.
⏑⏑––⏑⏑––⏑––⏑–॥

·········मिव गङ्गायां स्थितः कामो हरिं(l.24**84) 78.

* * * * * * * * * * *[1]

1 Copyist's Remark—अत ऊर्ध्वं ग्रन्थः त्रुटितः.